पड़िबद्धपड़बिआणं मत्तमहुअरणिअरमुक्कझङ्कारमिलिद-
महुरकोइलालावसङ्गीदसुहावहं तुहागमणदंसिआदरं
बिअ मअरन्दुज्जाणं लक्खीअदि ता पविसदु भवं ॥८९

राजा। (समन्तादवलोक्य) अहो रम्यता मकरन्दो-
द्यानस्य, इह हि ॥९०

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः।

---

प्रतिबद्धपटवितानं मत्तमधुकरनिकरमुक्तझङ्कारमिलितमधुरकोकि-
लालापसङ्गीतसुखावहं तवागमनदर्शितादरमिव मकरन्दोद्यानं लक्ष्यते
तत् प्रविशतु भवान्। मलयेति। मलयमारुतेन दक्षिणानिलेन आन्दो-
लितो दोलितो यो मुकुलायमानो मुकुलं कुर्व्वन् सहकारो अतिसौरभ
चूतवृक्षस्तस्य मञ्जरीणां रेणुपटलैः परागसमूहैः प्रतिबद्धं विरचितं
पटवितानं चित्रपटकृतचन्द्रातपो येन तत्तथोक्तम्। आन्दोलस्तु
दोलन इति कविकल्पद्रुमः। आम्रश्चूतो रसालोसौ सहकारोऽतिसौरभ
इति समूहे पटलं नर्नेति चामरः। मत्तेति। मत्तैर्मदान्वितैर्मधुकर-
निकरै र्भ्रमरसमूहै र्मुक्तो यो झङ्कारो ध्वनिविशेषस्तेन मिलितो
मिश्रितो यो मधुरः कोकिलानामालापोरव स्तदात्मकेन सङ्गीतेन
सुखावहम्। अतएव तवागमने दर्शित आदरो येन तथोक्तमिव ॥८९॥

राजेति। समन्तात् सर्व्वतः। हि यस्मात् इह मकरन्दोद्याने
अमीद्रुमा मत्त इव भान्तीति श्लोकीयेनान्वयः ॥९०॥

उद्यदिति। उद्यता मुद्गच्छतां विद्रुमाणां प्रवालानां कान्तिरिव
कान्तिर्येषां तानि तथोक्तैः। विद्रुमः पुंसि प्रवाले पुंनपुंसकमित्यमरः।
किसलयैः पल्लवैः। पल्लवोऽस्त्री किसलयमित्यमरः। ताम्रामरुणां
त्विषं द्युतिं बिभ्रतो धारयन्तः। ताम्रं शुल्वेऽरुणेऽपि चेति मेदिनी।

घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता, इवामी द्रुमाः॥[९१]

अपि च॥[९२]

मूले गण्डूषसेकासव इव वकुलैर्वास्यते पुष्पवृष्ट्या
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति।

---

तथा कलैर्मधुरास्फुटैर्भृङ्गालीनां भ्रमरश्रेणीनां विरुतैर्ध्वनिभिः करणैः। ध्वनौ तु मधुरास्फुटे कल इत्यमरः। अविशदव्याहारस्य अव्यक्त वचनस्य लीलां विलासं बिभ्रति ये ते तथोक्ताः। विशदः पाण्डरे व्यक्ते इति विकाण्डशेषः। तथा मलयानिलस्य दक्षिणवातस्य आहत्या आघातेन चलैश्चञ्चलैः शाखासमूहैः करणैर्मुहुः पुनः पुनर्घूर्णन्तो अमी द्रुमा अधुना मधोर्वसन्तस्य पक्षे मधुनो मद्यस्य प्रसङ्गं सम्पर्कं प्राप्य मत्ता इव भान्ति प्रकाशन्ते। मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते चेति विश्वः। अत्रोत्प्रेक्षालङ्कारः॥९१॥

अपिचेति। अन्यच्चेत्यर्थः॥९२॥

मूले इति। अद्य वकुलैर्वृक्षैः पुष्पवृष्ट्या पुष्पाणां वर्षणेन करणेन मूले तरुण्या युवत्याः गण्डूषेण मुखपूर्त्या सेकः प्रक्षेपो यस्य स तादृश आसवो मद्यं वास्यते सुरभीक्रियत इव। तरुणीनां वदनमदिरया वकुलो विकशतीति प्रसिद्धिः। गण्डूषो मुखपूर्त्तौ भि पुष्कर प्रसृतौ इति मेदिनी। तथा तरुण्या मुखशशिनि मधुना मद्येन आताम्रे अरुणे सति। आताम्रं पाटलं विषदारुणमिति धनञ्जयः। चम्पकानि पुष्पाणि चिराद्दीर्घकालात्परं भान्ति प्रकाशन्ते। सुन्दरीणां हास्ययोगाच्चम्पको विकशतीति प्रसिद्धिः। तथा भृङ्गसार्थैर्भृङ्गसंघैश्च कर्त्तृभिः अनुगीतैः पादाघातानन्तरमारब्धैर्गानैः करणैः अशोकेषु वृक्षेषु पादाहतिषु पादाघातेषु निर्भरं सातिशयं रसतां ध्वनतां तरुण्यानूपुराणां झङ्कारस्य रवस्य आकर्ण्य श्रुत्वा अनुकरणमिव आरभ्यते क्रियते। अत्रानु

आकर्ण्याशोकपादाहतिषु च रसतां निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः ॥ ९३

विदू । (आकर्ण्य ।) भो वअस्स ण एदे मड्डअरा णेउरसद्दं अणुहरन्ति णेउरसद्दोज्जेव्व एसो देवीए परिअणस्स ॥ ९४

राजा । वयस्य सम्यगवधारितम् ॥ ९५

(ततः प्रविशति वासवदत्ता काञ्चनमाला गृहीतपूजोपकरणा सागरिका विभवतश्च परिवारः ॥) ९६

वास । हञ्जे कञ्चणमाले आदेसेहि मे मअरन्दुज्जाणस्स मग्गं ॥ ९७

---

करण कर्म्मत्वेन झङ्कारस्येति षष्ठी नत्वाकर्ण्येत्यस्य कर्म्मत्वेन द्वितीया । नाव्ययसद्विधिः क्रियान्तरकारके इति न्यायात् । कामिनीनां पादाघातेनाशोकः स्फुटतीति प्रसिद्धिः । तथाहि । स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात्पादाघातादशोकस्तिलककुरुवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्म्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवातात् गीतान्नापान्नमेरु र्विकसति च पुरो नर्त्तनात्कर्णिकार इति । अत्रोत्प्रेक्षालङ्कारः ॥ ९३ ॥

विदू इति । भो इत्यादि । भो वयस्य न एते मधुकरा नूपुरशब्द मनुहरन्ति । नूपुरशब्द एव एष देव्याः परिजनस्य । अनुहरन्ति अनुकुर्व्वन्ति । अनुहारोऽनुकारः स्यादित्यमरः ॥ ९४ ॥

राजेति । सम्यक् सङ्गतम् ॥ ९५ ॥

तत इति । सुगमम् ॥ ९६ ॥

वासेति । हञ्जे इत्यादि । हञ्जे काञ्चनमाले आदेशय मे मकरन्दोद्यानस्य मार्गम् । हञ्जे इति चेट्याः सम्बोधनम् । इयडे

काञ्च। एदु दुदु भट्टिणी ॥९८

वास। (परिक्रम्य) हञ्जे कञ्चणमाले अध केत्ति-अदूरे दाणिं सो रत्तासोअपाअवो जहिं मए भअवदो मअणस्स पूआ णिव्वत्तइदव्वा ॥९९

काञ्च। भट्टिणि आसण्णो ज्जेव्व किं ण पेक्खदि भट्टिणी दूर क्खु सा णिरंतरुब्भिण्णकुसुमसोहिणी भट्टिणीए पड़िग्गहिदा माहवी लदा एसा क्खु अवरा णोमालिआ लदा जाए अआलकुसुमसमुग्गमसद्धालुणा भट्टिणा अणुदिणं आआसोअदि अप्पा ता एदं उदिकमिअ दीसदि

---

हञ्जे हलाह्वानं नीचं चेटीं सखीस्वतीत्यमरः। काञ्चनमाला चेटीविशेषः ॥९७॥

काञ्चेति। एदु एदु भट्टिणी एतु एतु भर्त्री ॥९८॥

वासेति। हञ्जे इत्यादि। हञ्जे काञ्चनमाले अथ कियद्दूरे इदानीं स रक्ताशोकपादपो यत्र मया भगवतो मदनस्य पूजा निर्व्वर्त्तयितव्या। अथ शब्दः प्रश्ने। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः। निर्व्वर्त्तयितव्या निष्पादयितव्या ॥९९॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि आसन्न एव किं न प्रेचते भर्त्री इयं सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्र्या परिगृहीता माधवीलता एषा खलु अपरा नवमालिकालता यस्या अकालकुसुमसमुद्गमश्रद्धालुना भर्त्रा अनुदिनं मायास्यते आत्मा तदेतामतिक्रम्य दृश्यत एव सरक्ताशोकपादपो यत्र देवी पूजां निर्व्वर्त्तयिष्यति। आसन्नो निकटवर्त्ती रक्ताशोकपादप इति शेषः। निरन्तरेति। निरन्तरं सततमुद्भिन्नैः कुसुमैः शोभते या सा। नवमालिका नवमल्लिका। अकालेति। अकालो वसन्तः नवमालिकाया ग्रीष्मकाल कुसुमदायित्वात्। तथाच ग्रीष्मेऽत नवमालिकेति त्रिकाण्डशेषः। तस्मिन् यः कुसुमोद्गम-

ज्जेव्व सो रत्तासोअपाअवो जहिं देवी पूअं णिव्वत्त-
इस्सदि ॥१००

वास। ता एहि तहिं ज्जेव्व लहुं गच्छह्म ॥१०१

काञ्च। एदु एदु भट्टिणी ॥१०२

( सर्व्वाः परिक्रामन्ति ॥ )१०३

वास। अअं सो रत्तासोअपाअवो जहिं अहं पूअं णिव्वत्तइस्सं ता एहि मे पूआणिमित्ताइं उवअरणाइं उवणेहि ॥१०४

साग। ( उपसृत्य। ) भट्टिणि एदं सव्वं सज्जं ॥१०५

वास। ( निरूप्यात्मगतम्। ) अहो पमादो परिअणस्स जस्स ज्जेव्व दंसणपयादो पअत्तेण रक्खीअदि तस्स ज्जेव

---

स्तव श्रद्धालुना सम्प्रतीयुषा स्पृहयालुनावा। श्रद्धा सम्प्रत्ययः स्पृहेत्यमरः। निद्रादित्वादालुः। आयास्यते परिश्रान्तौ क्रियते ॥१००॥

वासेति। तेत्यादि। तदेहि तत्रैव लघु गच्छामः। लघु द्रुतम्। लघुक्षिप्रमरं द्रुतमित्यमरः ॥१०१॥

काञ्चेति। एदु एदु भट्टिणी। एतु एतु भर्त्री ॥१०२॥

सर्व्वा इति। सुगमम्॥१०३॥

वासेति। अअमित्यादि। अयं स रक्ताशोकपादपो यत्राहं पूजां निर्व्वर्त्तयिष्ये। तदेहि मे पूजानिमित्तानि उपकरणानि उपनय। उपनय उपस्थापय ॥१०४॥

सागेति। उपसृत्य उपगम्य। भट्टिणीत्यादि। भर्त्रि एतत् सर्व्वं सज्जम्। सज्जं कृतोद्योगम् ॥१०५॥

वासेति। निरूप्य विचार्य्य। आत्मगतमनतिस्पष्टम्। यन्न कश्चिदपि जनं श्रावयतीत्यर्थः। तदुक्तं दर्पणे। अश्राव्यं खलु यद्वस्तु

दिट्ठिगोअरे पड़िदा भवे भोदु एवं दाव भणिस्सं ॥१०६

( प्रकाशम्। ) हञ्जे साअरिए कीस तुमं अज्ज मअण-महूसवपराहीणे परिअणे सारिअं उज्झिअ इह आगदा ता तहिं ज्जेव लहुं गच्छ एदं पि सव्वं पूओवअरणं कञ्चणमालाए हत्थे समप्पेहि ॥१०७

साग। जं भट्टिणी आणवेदि ॥१०८

( कतिचित्पदानि गत्वा आत्मगतम् ) सारिआ मए उण सुसङ्गदाए हत्थे समप्पिदा एदं पि अत्थि मे पेक्खिदुं कोदूहलं किं जहा तादस्स अन्तेउरे भअवं अणङ्गो अच्चीअदि इध वि तह ज्जेव किं वा अणह

---

तदिह स्वगतं मतमिति। अहो इत्यादि। अहो प्रमादः परिजनस्य यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेत् भवतु एवं तावत् भणिष्यामि। प्रमादोऽनवधानता। रक्ष्यते वार्य्यते सागरिकेति शेषः ॥१०६॥

प्रकाशमिति। सुव्यक्तं यत् सर्व्वान् श्रावयतीत्यर्थः। तदुक्तं दर्पणे। सर्व्वश्राव्यं प्रकाशं स्यादिति। हञ्जे इत्यादि। हञ्जे सागरिके कस्मात्त्वमद्य मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वा इहागता तत् तत्रैव लघु गच्छ एतदपि सर्व्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय। मदनमहोत्सवपराधीने मदनमहोत्सवपराधीने। सारिका पक्षिविशेषः। सालिक् इति यस्याः प्रसिद्धिः ॥१०७॥

सागेति। जमित्यादि। यद्भर्त्त्री आज्ञापयति ॥१०८॥

कतिचिदिति। सारिएत्यादि। सारिकामया पुनः सुसङ्गतायां हस्ते समर्पिता एतदपि अस्ति मे प्रेक्षितुं कौतूहलं किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते इहापि तथैव, किंवा अन्यथेति। तद-

त्ति ता अलक्खिआ भविअ पेक्खिस्सं जाव इह पूआ-समओ होदि ताव अहम्पि भअवन्तं मअणं ज्जेव्व पूइदुं कुसुमाइं अवचिणिस्सं ॥१०९

( परिक्रम्यावलोक्य च कुसुमावचयं नाटयति ॥११०

वास । कञ्चणमाले पडिट्ठाबेहि असोअमूले भअवन्तं पज्जुस्सं ॥१११

काञ्च । जं भट्टिणी आणवेदि । (इति तथा करोति॥)११२

विदू । (परिक्रम्यावलोक्य च।) भो वअस्स जधा वीसन्तो णेउरसद्दो तधा तक्केमि आअदा देवी असोअमूलं त्ति ॥११३

---

लक्षितामूत्वा प्रेक्षिष्ये। यावदिह पूजासमयो भवति तावदहमपि भगवन्तं मदनमेव पूजयितुं कुसुमान्यवचेष्यामि। कौतूहलं लोलता। रम्यवस्तु समालोके लोलता स्यात् कुतूहलमिति। अन्यया पृथग्विधया। इत्येतत्प्रेक्षितमिति सम्बन्धः। अलक्षिता देव्या अदृष्टा। अवचेष्यामि संग्रहीष्यामि ॥१०९॥

परीति। अवलोक्य देव्याहं दृश्येनवेति दृष्ट्वा ॥११०॥

वासेति। कञ्चेत्यादि। काञ्चनमाले प्रतिष्ठापय अशोकमूले भगवन्तं प्रद्युम्नम्। प्रद्युम्नं मदनम्। मदनोमन्मथोमारः प्रद्युम्नो मीनकेतन इत्यमरः ॥१११॥

काञ्चेति। जमित्यादि। यद्भर्त्री आज्ञापयति। इति एवमुक्त्वा। तथाकरोति कामप्रतिकृतिं प्रतिष्ठापयति ॥११२॥

विदू इति। भो इत्यादि। भो वयस्य यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयामि आगता देवी अशोकमूलमिति। विश्रान्तः शान्तः। इति तर्कयामीति सम्बन्धः ॥११३॥

राजा। वयस्य सम्यगवधारितं पश्य इयं देवी या किलैषा ॥११४

कुसुमसुकुमारमूर्त्तिर्दधती नियमेन तनुतरं मध्यम्।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥११५

तदेह्युपसर्पावः ॥११६

राजा। (उपसृत्य।) प्रिये वासवदत्ते ॥११७

वास। (विलोक्य।) कधं अज्जउत्तो जअदु जअदु अज्जउत्तो। अलङ्करेदु इमं देसं आसणपड़िग्गहेण एदं आसणं एत्थ उवविसदु अज्जउत्तो ॥११८

राजा। (नाट्येनोपविशति॥)११९

काञ्च। भट्टिणि सहत्थदिसेहिं कुसुमकुङ्कुमचन्दण-

---

राजेति। अवधारितं निश्चितम्। या इत्यस्य श्लोकीयेनाभातीत्यनेन सम्बन्धः ॥११४॥

कुसुमेति। कुसुमस्येव सुकुमारा कोमलामूर्त्तिर्यस्याः सा। सुकुमारन्तु कोमलमित्यमरः। तथा नियमेन व्रतेन तनुतरमतिक्षीणं मध्यं दधती या एषा देवी मकरकेतो र्मदनस्य पार्श्वस्था समीपस्थिता चापयष्टिः ऋजूकृतं धनुरिव आभाति प्रकाशते। अतोऽत्रेचालङ्कारः ॥११५॥

तदिति। सुगमम् ॥११६॥

राजेति। सुगमम् ॥११७॥

वासेति। कधमित्यादि। कथमार्य्यपुत्त्रः। जयति जयति आर्य्यपुत्त्रः। अलङ्करो तु इमं देशमासन परिग्रहेण। एतदासनमत्रोपविशत्वार्य्यपुत्त्रः। अलङ्करोतु भूषयतु ॥११८॥

राजेति। नाट्येन उपवेशनरूपप्रदर्शनया ॥११९॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि स्वहस्तदत्तैः कुसुमकुङ्कुम-

वासेहिं सोहिदं रत्तासोअपाअवं गदुअ अच्चीअदु भअवं पज्जुसो ॥[120]

वास । उवणेहि मे पूओवअरणाइं ॥[121]

काञ्च । ( उपनयति ॥ )[122]

वास । ( तथा करोति ॥ )[123]

राजा । प्रिये वासवदत्ते ॥[124]

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः
  कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
  बालप्रवालविटपिप्रभवा लतेव ॥[125]

---

चन्दनवासोभिः शोभितं रक्ताशोकपादपं गत्वा अर्च्यतां भगवान् प्रद्युम्नः । कुसुमेत्यादि अर्च्यतामित्यनेनान्वितम् ॥१२०॥

वासेति । उवेत्यादि । उपनय मे पूजोपकरणानि ॥१२१॥

काञ्चेति । सुगमम् ॥१२२॥

वासेति । तथा करोति पूजयति ॥१२३॥

राजेति । सुगमम् ॥१२४॥

प्रत्यग्रेति । प्रत्यग्रेणाभिनवेन मज्जन विशेषेण मङ्गलस्नानेन विविक्ता पूता कान्तिर्यस्याः सा । प्रत्यग्रोऽभिनव इत्यमरः । विविक्तं स्यादसम्पृक्ते विवेकान्वित पूतयोरिति विश्वः । तथा कौसुम्भरागेण कुसुम्भपुष्पकृत लोहितिम्ना रुचिरं मनोहरं स्फुरद्दीप्तिमच्च अंशुकान्तं वस्त्ररूपं यस्याः सा तथोक्ता । स्वरूपेऽन्तं विनाशे ना नस्त्रोशेषेऽन्तिके त्रिष्विति त्रिकाण्डशेषः । मकरकेतनं काममर्चयन्ती त्वं बाला अभिनवाः प्रवालाः पल्लवा यस्य स तस्मिन् विटपिनि वृक्षे प्रभवा उत्पन्ना लतेव विभ्राजसे शोभसे । प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे इति मेदिनी । अत्रोत्प्रेक्षालङ्कारः ॥१२५॥

अपि च ।१२६

स्पृष्टस्त्वयैव दयिते स्मरपूजाव्यापृतेन हस्तेन ।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥१२७

अपि च ।१२८

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न सम्प्राप्तः पाणिस्पर्शोत्सवस्तव ॥१२९

काञ्च । भट्टिणि अच्चिदो भअवं पज्जुण्णो ता करेहि भत्तुणो उइदं पूआसक्कारं ।१३०

वास । तेण हि उवणेहि मे कुसुमाइं विलेवणञ्च ॥१३१

---

अपिचेति । सुगमम् ॥१२६॥

स्पृष्ट इति । हे दायिते प्रिये । दयितं वल्लभं प्रियमित्यमरः । स्मरपूजायां मदनार्च्चने व्यापृतेन व्यासक्तेन हस्तेन करेण त्वया स्पृष्ट एव अशोक उद्भिन्नमुद्गतमपरं मृदुतरमतिकोमलं किसलयं पल्लवो यस्य स तथा भूत इव लक्ष्यते । पाणितलस्यातिलोहिततया पल्लवानुकारित्वादितिभावः । अत्रोत्प्रेक्षालङ्कारः ॥१२७॥

अपिचेति ॥१२८॥

अनङ्ग इति । अयमनङ्गोमदनो अनङ्गत्वमात्मनोऽङ्गराहित्यमद्य ध्रुवं निश्चितं निन्दिष्यति यत् यस्मात् अनेन मदनेन तवपाणिस्पर्शोत्सव स्त्वद्धस्तस्पर्शनजनितपरमानन्दो न सम्प्राप्तः । स्पर्शस्य त्वगिन्द्रिय ग्राह्यत्वात् त्वचश्च शरीरमन्तरेणासद्भावादितिभावः। तदुक्तम् । स्पर्श-त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारक इति ॥१२९॥

काञ्चेति । भट्टिणीत्यादि । भर्त्रि अर्च्चितो भगवान् प्रद्युम्न-स्तत्कुरु भर्त्तुरुचितं पूजासत्कारम् ॥१३०॥

वासेति । तेणेत्यादि । तेनहि उपनय मे कुसुमानि विलेप-नञ्च । विलेपनं चन्दनादि ॥१३१॥

काञ्च। भट्टिणि एदं सव्वं सज्जं ॥१२२

वास। नाम्बेन राजानं पूजयति ॥१२३

साग। (गृहीतकुसुमा।) हद्धी हद्धी कहं कुसुम-लोहोक्खित्तहिअआए अदिचिरं ज्जेव मए कदं ता इमिणा सिन्दुबारविड़बेण ओबारिअसरीरा भविअ पेक्खामि ॥१२४

(विलोक्य।) कहं पच्चक्खो ज्जेव अपुव्वो कुसुमाउहो अह्माणं तादस्स अन्तेउरे चित्तगदो अच्चीअदि इह पच्च-क्खीकिदो ता अहं पि इमेहिं कुसुमेहिं इह ट्ठिदा ज्जेव भअवन्तं कुसुमाउहं पूअइस्सं। (इति कुसुमानि प्रक्षि-पति) ॥१२५

णमो दे भअवं कुसुमाउह सुभदंसणो मे भविस्ससि

---

काञ्चेति। भट्टिणीत्यादि। भर्त्रि एतत् सर्व्वं सज्जम् ॥१२२॥

वासेति। सुगमम् ॥२२३॥

सागेति। हद्धीत्यादि। हा धिक् हा धिक् कथं कुसुमलोभोत् क्षिप्तहृदयया अतिचिरमेव मया कृतं तदनेन सिन्धुवारविटपेनाप-वारितशरीराभूत्वा प्रेक्षे। कुसुमेति। कुसुमलोभेन पुष्पाभिलाषेण उत्क्षिप्तमाकृष्टं हृदयं मनो यस्याः सा तथोक्ता। अतिचिरमति॰ विलम्बः। सिन्धुवारस्य वृक्षस्य विटपेन शाखाप्रशाखाविस्तारेण अपवारितशरीरा व्यवहितशरीरा। विस्तारो विटपोऽस्त्रियामिति। अन्तर्द्धा व्यवधा पुंसित्वन्तर्द्धिरपवारणमिति चामरः ॥१२४॥

विलोक्येति। कहमित्यादि। कथं प्रत्यक्ष एव अपूर्व्वः कुसुमा-युधः। अस्माकं तातस्यान्तःपुरे चित्रगतो ऽर्च्यते इह प्रत्यक्षीकृतः तदहमपि एभिः कुसुमैरिहास्थितैव भगवन्तं कुसुमायुधं पूजयिष्ये। अपूर्व्वः पूर्व्वमदृष्टः ॥ १२५ ॥

दिट्ठं जं दिट्ठव्वं अमोघदंसणो मे भविस्ससि। (इति प्रणमति)॥१२६

अच्चरीअं अच्चरीअं दिट्ठो वि पुणो पेक्खिदव्वो ता जाव ण को वि मं पेक्खदि दाव ज्जेव्व गमिस्सं। (इति कतिचित्पदानि गच्छति)॥१२७

काञ्च। अज्ज वसन्तअ एहि सम्पदं तुमं पि सोत्थिवाअणं पड़ीच्छेहि॥१२८

विदू। (उपसर्पति)॥१२९

वास। (विलेपनकुसुमाभरणदानपूर्व्वकम्।) अज्ज एदं सोत्थिवाअणं पड़ीच्छ। (इत्यर्पयति)॥१४०

विदू। (सहर्षं गृहीत्वा।) सोत्थि भोदीए॥१४१

---

णमो इत्यादि। नमस्ते भगवन् कुसुमायुध शुभदर्शनो मे भविष्यसि दृष्टं यत्द्रष्टव्यम् अमोघदर्शनो मे भविष्यसि। अमोघभव्यर्थं सफलमिति यावत् दर्शनं यस्य स तथोक्तः। मोघं निरर्थकमित्यमरः॥१२६॥

अच्चरीअमित्यादि। आश्चर्यमाश्चर्यं दृष्टोपि पुनः प्रेक्षितव्यः तद्यावन्नकोपि मां प्रेक्षते तावदेव गमिष्यामि। यावत् यावद्गमनेन॥१२७॥

काञ्चेति। अज्जेत्यादि। आर्य्य वसन्तक एहि साम्प्रतं त्वमपि स्वस्तिवाचनं प्रतीच्छ। साम्प्रतमिदानीम्। स्वस्तिवाचनमाभरणादि। प्रतीच्छ गृहाण॥१२८॥

विदूइति। सुगमम्॥१२९॥

वासेति। विलेपनेति। तथाच व्यासः। सम्पूज्य गन्धपुष्पाद्यै र्ब्राह्मणान् स्वस्तिवाचयेत्। धर्म्मे्यकर्म्मणि मङ्गल्ये संग्रामाद्भुतदर्शने इति। अज्जेत्यादि। आर्य्य एतत् स्वस्तिवाचनं प्रतीच्छ॥१४०॥

विदूइति। सोत्थिभोदीए स्वस्ति भवत्यै॥१४१॥

(नेपथ्ये वैतालिकः पठति)॥[१४२]

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन्।
संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते॥[१४३]

साग। (श्रुत्वा सहर्षं परिवृत्य राजानं दृष्ट्वा सस्पृहम्) कहं अअं सो राआ उअअणो णाम जस्स अहं तादेण दिण्णा॥[१४४]

(दीर्घं निश्वस्य।) ता परप्पेसणदूसिदं वि मे

---

नेपथ्यइति। वैतालिको राज्ञां कार्य्यबोधकः। वैतालिका बोधकरा इत्यमरः॥ १४२॥

अस्तेति। सम्प्रतीदानीम् अस्ते चरमाचले अपास्ता निक्षिप्ताः समस्ताभासः प्रभा येन स तस्मिन्। अस्तस्तु चरमक्ष्माभृदित्यमरः। रवौ नभसो गगनस्य पारं परसीमां प्रयाते गते सति सायन्तने समये समं युगपत् आस्थानीं सभां सम्पतन् आगच्छन्। समज्यापरिषद्गोष्ठी सभासमितिसंसदः। आस्थानी क्लीवमास्थानमित्यमरः। एष नृपजनः सभाजनार्थसमागतो राजलोकः दृशां चक्षुषां प्रीत्युत्कर्षं हर्षातिशयं करोतीति तस्य उदयनस्य तन्नाम्नः इन्दुपक्षे उद्गच्छतः इन्दोश्चन्द्रस्येव तव सरोरुहाणां पद्मानां द्युतिं शोभां मुष्णन्ति तदधिकशोभाधारितया तन्मुद्रा विधायितयावा अपहरन्ति ये तान् पादान् चरणानि गौरवात् बहुत्वं पक्षे किरणान् आसेवितुम् उद्वीक्षते अपेक्षते पक्षे ऊर्द्ध्वमालोकयति। पादा रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः। अत्र पूर्णोपमालङ्कारः। यदुक्तं काव्यप्रकाशे। साधर्म्यमुपमा भेदेइति॥ १४३॥

सागेति। परिवृत्यआनूत्वा। कहमित्यादि। कथमयं स राजा उदयनोनाम यस्याहं तातेन दत्ता। दत्तादात्तं प्रतिश्रुता॥ १४४॥

दीर्घमिति। तेत्यादि। तत्परप्रेषणदूषितमपिमे शरीरम्

सरीरं एदस्स दंसणेण दाणिं बहुमदं संवुत्तं ॥१४५

राजा। कथमुत्सवापहृतचेतोभिः सन्ध्यातिक्रमोऽप्यस्माभिर्नोपलक्षितः देवि पश्य॥१४६

उदयगिरितटान्तरितं प्राची सूचयति दिङ्निशानाथम्।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी॥१४७

देवि तदुत्तिष्ठावः आवासाभ्यन्तरमेव प्रविशावः॥१४८

(सर्व्वे उत्थाय परिक्रामन्ति)॥१४९

साग। कथं पत्थिदा देवी भोदु तुरिअं गमिस्सं॥१५०

---

एतस्य दर्शनेन इदानीं बहुमतं संवृत्तम्। परप्रेषणेन अपरजनस्य भृत्यभावेन दूषितं दुःखीकृतम्। एतस्य राज्ञः। दर्शनेनेति। एवं विधाया मम कालेनानेन समागमो भवितुमर्हतीति बुद्धेरिति भावः। बहुमतं समादृतम्। एतद्दर्शनात् पूर्व्वं शरीरं प्रति न तादृक् समादर आसीदिति भावः॥ १४५॥

राजेति। उत्सवेति। उत्सवेनापहृतानि आकृष्टानि चेतांसि येषां ते तैः। उपलक्षितः अनुभूतः॥ १४६॥

उदयेति। प्राची पूर्व्वादिक् परिपाण्डुना सर्व्वतः पाण्डुवर्णेन मुखेन करणेन निशानाथं चन्द्रमुदयगिरेः पूर्व्वपर्व्वतस्य तटेन क्षेत्रेण अन्तरितं व्यवहितं सूचयति अनुमापयति। उदयः पूर्व्वपर्व्वत इत्यमरः। तटं नपुंसकं क्षेत्रे प्रतीरेषु तटीत्रिष्विति मेदिनी। यथा रमणी प्रोषितभर्त्तृका परिपाण्डुना मुखेन प्रियं वल्लभं हृदयस्थितं चिन्ताविषयं सूचयति तथा। असन्निहितेहि भर्त्तरि शोकशोषादङ्गनानामङ्गेषु पाण्डुता जायते। अतएव दर्पणे। अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशता रुचिरिति। अत्रोपमालङ्कारः। उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति॥ १४७॥

देवीति। आवासाभ्यन्तरं गृहाभ्यन्तरम्॥ १४८॥

सर्व्वे इति। परिक्रामन्ति भ्रमन्ति॥ १४९॥

(राजानं सस्पृहं दृष्ट्वा निश्वस्य च।) कधं मन्दभाइ-णीए मए पेक्खिदुं वि चिरं ण पारिदो अअं जणो। इति निष्क्रान्ता ॥१५१

राजा। परिक्रामन्॥१५२

देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्।
श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः सञ्जातलज्जा इव॥१५३

इति निष्क्रान्ताः सर्वे॥१५४

---

सागेति। कधमित्यादि। कथं प्रस्थिता देवी भवतु त्वरितं गमिष्यामि॥१५०॥

राजानमिति। कधमित्यादि। कथं मन्दभागिन्या मया प्रेक्षितुमपि चिरं न पारितो ऽयं जनः। मन्दभागो मन्दभाग्यमस्या अस्तीति मन्दभागिनी तया पारितः शक्तः॥१५१॥

राजेति। सुगमम्॥१५२॥

देवीति। हे देवि शशिनश्चन्द्रस्य शोभायास्तिरस्कारिणा अनुकारिणा त्वन्मुखपङ्कजेन विनिर्जितानि न्यक्कृतानि अब्जानि सहसा लघु नैव विगता छाया कान्तिर्येषां तानि तथाभूततां गच्छन्ति प्राप्नुवन्ति। छाया सूर्यप्रियाकान्ति प्रतिबिम्बमनातप इत्यमरः। तथा ते तव परिवारायां परिवेष्टिकानां वारवनितानां वाराङ्गनानां गीतानि श्रुत्वा भृङ्गाङ्गना जातलज्जा इव सलज्जा इव मुकुलान्तरेषु मुकुलानामभ्यन्तरेषु शनकैर्मन्दं लीयन्ते प्रविशन्ति पश्य। अद्रुतेशनैरित्यमरः। त्यादिव्येतिटेः प्रागक्। अत्रोत्प्रेक्षालङ्कारः। तदुक्तं काव्यप्रकाशे। सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यदिति॥१५३॥

इतीति। इत्युक्तौ सत्या मित्यर्थः॥१५४॥

प्रथमोऽङ्कः ॥[१५५]

---

प्रथमोऽङ्कः प्रथमः परिच्छेदः । अङ्कः स्यानेऽन्तिके मन्तौ रूपकोत्सङ्गलच्मसु । नाटकादिपरिच्छेदेइति विश्वः । सचाखिलपात्रनिष्क्रान्तौ कार्य्यः । यथाह दर्पणे । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितइति ॥ १५५ ॥

इति श्रीशिवनाथशर्म्मकृतायां रत्नावलीटीकायां विद्योतनीसमाख्यायां प्रथमाङ्कविवरणम् ॥

---

## द्वितीयोऽङ्कः ।

(ततः प्रविशति सारिकापञ्जरव्यग्रहस्ता सुसङ्गता ।)[१]

सुसं । हद्धी हद्धी अह दाणिं मम हत्थे इमं सारिअं णिक्खिविअ कहिं गदा मे पिअसही साअरिआ भविस्सदि ।[२]

(अन्यतो दृष्ट्वा । ) एसा क्खु णिउणिआ इध ज्जेव्व आअच्छदि ता जाव एदं पुच्छिस्सं ।[३]

(ततः प्रविशति निपुणिका । )[४]

---

ततइति । सारिकेति । सारिकायाः पञ्जरे बन्धनगृहे व्यग्रो व्यासक्तो हस्तो यस्याः सा । व्यग्रो व्यासक्त आकुले इत्यमरः ॥१॥

सुसमिति । हद्धीत्यादि । हा धिक् हा धिक् अथेदानीं मम हस्ते इमां सारिकां निक्षिप्य कुत्रगता मे प्रियसखी सागरिका भविष्यति । अथ शब्दः प्रश्ने ॥ २ ॥

अन्यतइति । एसेत्यादि । एषा खलु निपुणिका इत एवागच्छति तद्यावदेनां प्रच्यामि । इतोऽस्मिन् । एनां निपुणिकाम् ॥३॥

ततइति । सुगमम् ॥ ४ ॥

निपु । उअलद्धो क्खु मए भट्टिणो वुत्तन्तो ता जाव गदुअ भट्टिणीए णिवेदेमि । (इति परिक्रामति ।)[५]

सुसं । हला णिउणिए कहिं दाणिं तुमं विम्हओक्खित्तहिअआ विअ इह ट्ठिदं मं अवहीरिअ कुदो अदिक्कमसि ।[६]

निपु । कधं सुसङ्गदा हला सुसङ्गदे सुट्ठु तुए जाणिदं एदं क्खु मम विम्हअस्स कारणं अज्ज किल भट्टा सिरिपव्वदादो आअदस्स सिरिखण्डदासणामहेअस्स धम्मिअस्स सआसादो अआलकुसुमसंजणणदोहअं सिक्खिअ अत्तणो पड़िग्गहिदं णोमालिअं कुसुमसमिद्धिसोहिअं करिस्सादि त्ति तहिं एदं वुत्तन्तं जाणिदुं देवीए पेसिदह्मि तुमं उण कहिं पत्थिदा ।।[७]

---

निपुइति । उअ इत्यादि । उपलब्धः खलु मया भर्त्तुर्वृत्तान्त स्तत् यावत् गत्वा भर्त्त्यै निवेदयामि । उपलब्धोऽवगतः । उपलम्भस्त्वनुभव इत्यमरः । भर्त्तू राज्ञः । वृत्तान्तो वार्त्ता । भर्त्रै देव्यै ॥५॥

सुसमिति । हलेत्यादि । सखि निपुणिके कुत्रेदानीं त्वं विस्मयोत्क्षिप्त हृदयेवे हस्थितां मामवधीर्य्य कुतोऽतिक्रामसि ।कुत्रकुत्रचित् । विस्मयेति विस्मयेन उत्क्षिप्त मुत्तरलीकृतं हृदयं मनो यस्याःसा । अवधीर्य्य अवज्ञाय । अवधीरत्‌कवज्ञायामिति कविकल्पद्रुमः । अतिक्रामसि गच्छसि ॥ ६ ॥

निपुइति । कधमित्यादि । कथं सुसङ्गता सखि सुसङ्गते सुष्ठु त्वया ज्ञातम् इदं खलु मम विस्मयस्य कारणम् अद्य किल भर्त्ता श्रीपर्व्वतादागतस्य श्रीखण्डदासनामधेयस्य धार्म्मिकस्य सकाशात् अकालकुसुम सञ्जननदोहदं शिक्षित्वा आत्मनः परिगृहीतां नवमालिकां कुसुमसमृद्धिशोभितां करिष्यतीति । तत्र एतं वृत्तान्तं ज्ञातुं

सुसं । पिअसहीं साअरिअं अण्णेसिदुं ॥८

निपु । हला दिट्ठा मए साअरिआ गहीदसमुग्गअ-चित्तफलअवत्तिआ समुव्विग्गा कअलीघरं पविसन्ती ता गच्छ पिअसही अहं वि देवीसआसं गमिस्सं । इति निष्क्रान्ते ॥९

प्रवेशकः ॥१०

---

देव्या प्रेषिताक्षि त्वं पुनः कुत्र प्रस्थिता । सुष्ठु प्रशंसनीयम् । ज्ञात मनुमितम् । क्वेति स्मृतवार्त्तायाम् । धार्मिकस्य धर्म्मपरायणस्य अकाले यत्कुसुमसंजननं पुष्पोत्पादनं तद्दोहदं तद्दप्रयोगिद्रव्यम् । तरुगुल्मलतादीना मकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत् क्रियेति शब्दार्णवः । शिक्षिता ज्ञाता । इति पर्य्यन्तेन विस्म-यकारणं प्रकाशितम् । तत्रेति प्रेषितेत्यनेनान्वितम् । प्रस्थिता गच्छसि ॥ ७ ॥

सुसमिति । पिअसहीमित्यादि । प्रियसखीं सागरिकामन्वे-षितुम् । अन्वेषितुं प्रस्थितास्मीत्यर्थः । णिपु इति । सखि दृष्टा मया सागरिका गृहीत समुद्गक चित्रफलकवर्त्तिका समुद्विग्ना कदलीगृहं प्रविशन्ती तद्गच्छ प्रियसखि अहमपि देवी सकाशं गमिष्यामि । समुद्गको-वर्त्तिका वर्णवर्त्तिकाद्याधार सम्पुटकः । समुद्गकः सम्पुटक इत्यमरः । चित्रफलकश्चित्राधार काष्ठादि पट्टकः ॥ ८ ॥

विविधवर्णवर्त्तिका । गृहीतानि एतानि वस्तूनि यया सा तथोक्ता । प्रविशन्ती इत्यन्वयः ॥ ९ ॥

प्रवेशकोऽर्थविशेषः । अतीतस्याकृताभिनयस्यापि श्रीकण्ठदासा गमनस्य नृपतेरकालकुसुमसञ्जननप्रयोग शिक्षाया देव्या स्तदवगम कौतूहलस्य गृहीत चित्रोपकरणसागरिकाया मदनावस्थाविर्भावस्य च भविष्यतश्च तथाविधसागरिकाप्रवेशचित्रकर्म्मकरणाकालिक नवमा-लिकाकुसुमसञ्जननानां नीचपात्रद्वयकृतनीचोक्तिप्रयोगेण निदर्शकत्वात्।

( ततः प्रविशति गृहीतचित्रफलकवर्त्तिका मदनावस्थां नाटयन्ती सागरिका )[११]

साग । हिअअ पसीद पसीद किं इमिणा आआसमेत्तफलेण दुल्लहजणप्पत्थणाणुबन्धेण अस्स जेण एव्व दिट्ठेण दे ईदिसो सन्तावो णं वट्टदि । पुनोवि तं जेव्व पेक्खिदुं अहिलससि अहो दे मूढदा । अइ णिसंस हिअअ जम्मदो पहुदि सह संवड्ढिअं इमं जणं परिहरिअ क्खणमेत्तदंसणपरिचिदं जणं अणुगच्छन्तो ण लज्जेसि अहवा को तुह दोसो अणङ्गसरपडणभीदेण तुए एव्वं अज्ज ववसिदं भोदु दाव अणङ्गं दाव उवालहिस्सं ॥[१२]

---

यदुक्तं दर्पणे। प्रवेशको ऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथेति ।अनुदात्तोक्त्या नीचोक्त्या प्राकृतभाषयेति यावत् अतएव भरतः । प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयइति । अङ्कद्वयान्तरिति प्रथमाङ्के प्रतिषेधः विष्कम्भक धर्मातिदेशेन भूतभविष्यदर्थज्ञापकत्वम् ॥१०॥

तत इति । मदनावस्थां ।दशावस्थाः स तत्रादावभिलाषोऽथ चिन्तनम् । स्मृतिर्गुणकथोद्वेगप्रलापोन्मादसंज्वराः । जड़तामरणञ्चेति दुरवस्थं यथोत्तरमिति दशरूपकोक्तामुद्वेगरूपाम् ॥११॥

सागेति । हिअअ इत्यादि । हृदय प्रसीद प्रसीद किमनेन आयासमात्रफलेन दुर्लभजनप्रार्थनानुबन्धेन अन्यच्च येनैव दृष्टेन ते ईदृशः सन्तापोनुवर्त्तते पुनरपि तमेव प्रेक्षितुमभिलषसि अहो ते मूढ़ता । अयि नृशंस हृदय जन्मतः प्रभृति सह संवर्द्धितमिमं जनं परिहृत्य क्षणमात्रदर्शनपरिचितं जनमनुगच्छन् लज्जसे अथवा कस्तव दोषो अनङ्गशरपतनभीतेन त्वया एवमद्य व्यवसितं भवतु तावत् । अनङ्गं तावदुपालप्स्ये । आयासमात्रं क्लेशमात्रं फलं यस्य स तेन । दुःखेन लभ्यते असौ दुर्लभः तथा भूतस्य जनस्य प्रार्थनाया अनुबन्धेन

सा० ( साञ्जमञ्जलिं बद्ध्वा जानुभ्यां स्थित्वा। ) भअवं कुसुमाउह णिज्जिदसअलसुरासुरो भविअ इत्थिआजणं पहरन्तो कहं ण लज्जेसि ॥[१३]

( विचिन्त्य। ) सव्वधा मम मन्दभाइणीए इमिणा दुण्णिमित्तेण अवस्सं मरणं उवट्ठिदं ॥[१४]

( फलकमवलोक्य। ) ता जाव इह ण कोवि आअ-च्छदि दाव आलेक्खसमप्पिदं तं अभिमदं जणं पेक्खिअ जहा समीहिदं तहा करिस्सं ॥[१५]

( सावष्टम्भमेकमना भूत्वा नाट्येन फलकं गृहीत्वा निश्वस्य। ) जइ वि मे अदिसज्झसेण वेवदि अअं अदि-

---

पौनःपुण्येन। दृश्योऽनुभूयमानः। अहो विस्मये। नृशंस क्रूर। नृशंसो घातकः क्रूर इत्यमरः। व्यवसितं निश्चितम्। तावत् तत्। उपालप्स्ये दुर्वचयामि। दुर्वादः स्यादुपालम्भस्तत्र यः स्तुतिपूर्वकः। सोल्लुण्ठनं सनिन्दस्तु यस्तत्र परिभाषणमिति जटाधरः ॥१२॥

सास्रमिति। अस्रेणाश्रुणा सह वर्त्तमानं सास्रम्। अस्रमश्रु-चेत्यमरः। स्थित्वा ऊर्द्धीभूय। भअवमित्यादि। भगवन् कुसुमायुध विनिर्ज्जितसकलसुरासुरोभूत्वा स्त्रीजनं प्रहरन् कथं न लज्जसे ॥१३॥

विचिन्त्येति। विचार्य्येत्यर्थः। सव्वधेत्यादि। सर्व्वथा मम मन्दभागिन्या अनेन दुर्निमित्तेनावश्यं मरणमुपस्थितम्। सर्व्वथा अङ्गीकारे। दुर्निमित्तेन असंशमनीयतया दुष्टेन हेतुना दुर्लभजनानुरागेणेति यावत् ॥१४॥

फलकमिति। तेत्यादि। तद्यावदिह न कोपि आगच्छति तावदालेख्यसमर्पितं तमभिमतं जनं प्रेक्ष्य यथा समीहितं तथा करिष्यामि। आलेख्यसमर्पितं चित्रितम्। अभिमतं मनोगतम्। समीहितमभिलषितम्। तथा करिष्यामि मरिष्यामीत्यर्थः ॥१५॥

सावष्टम्भमिति। अवष्टम्भेन आरम्भेण सह वर्त्तमानमित्यर्थः। जइ इत्यादि। यद्यपि मे अतिसाध्वसेन वेपते अयमतिमात्रमग्रहस्तो

मेत्तं अग्गहत्थो तह वि तस्स जणस्स अस्सो दंसणोवाओ णत्थि त्ति ता जहा तहा आलिहिअ णं पेक्खिस्सं । इति नाट्येन लिखति ॥[१६]

( ततः प्रविशति सुसङ्गता । )[१७]

सुसं । एदं क्खु कअलीघरं ता जाव पविसामि ॥[१८]

( प्रविश्यावलोक्य च सविस्मयम् । ) एसा मे पिअसही साअरिआ किं उण एसा गुरुआणुराओक्खित्तहिअआ विअ किम्पि आलिहन्ती ण मं पेक्खदि भोदु ता जाव से दिट्ठिवहं परिहरिअ णिरूवइस्सं ॥[१९]

---

स्तथापि तस्य जनस्य अन्योदर्शनोपायोनास्तीति तद्‌यथा तथा आलिख्य एनं प्रेक्षिष्ये । अतिसाध्वसेन अतिभयेन । वेपते कम्पते । अग्रहस्तोहस्तस्याग्रः पाणिरिति यावत् । यथा तथा येन तेनापि प्रकारेण । आलिख्य चित्रयित्वा । यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्द्धा स्यादित्युक्त पूर्वरागात्मकविप्रलम्भावस्थत्वादत्र चित्रक्रियाया औचित्यम् । यदुक्तम् । वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोपि गदित इति ॥१६॥

तत इति । सुगमम् ॥१७॥

सुसमिति । एदमित्यादि । इदं खलु कादलीगृहं तत् यावत् प्रविशामि ॥१८॥

प्रविश्येति । एसेत्यादि । एषा मे प्रियसखी सागरिका किं पुनरेषा गुर्व्वनुरागोत्क्षिप्तहृदयेव किमप्यालिखन्ती न मां प्रेक्षते भवतु तत् यावदस्या दृष्टिपथं परिहृत्य निरूपयिष्यामि । गुरुणा महता अनुरागेण उत्क्षिप्तमाकृष्टं हृदयं यस्याः सा तथा । यावदवधार-

(स्वैरं पृष्ठतोऽस्याः स्थित्वा दृष्ट्वा सहर्षम्।) कहं भट्टा आलिहिदो साहु साअरिए साहु अहवा ण कमलाअरं वज्जिअ राअहंसी अण्णस्सिं अहिरमदि ॥२०

साग। (सवाष्पम्।) आलिहिदो मए एसो किं उण अणवरदणिवडन्तवाहसलिलेण मे दिट्ठी पेक्खिदुं ण पहुवदि ॥२१

(मुखमुत्तानीकृत्याश्रूणि निवारयन्ती सुसङ्गतां दृष्ट्वा उत्तरीयेण फलकं प्रच्छादयन्ती स्मितं कृत्वा।) कहं पिअसही सुसङ्गदा ॥२२

(उत्थाय हस्ते गृहीत्वा।) सहि सुसङ्गदे इदो उवविस ॥२३

---

णार्थः। परिहृत्य परित्यज्य। निरूपयिष्यामि किं लिखतीति विचारयिष्यामि ॥१९॥

स्वैरमिति। स्वैरं मन्दम्। मन्दस्वच्छन्दयोः स्वैरमित्यमरः। पृष्ठतः पश्चात्। दृष्ट्वा चित्रमितिशेषः। कहमित्यादि। कथं भर्त्ता आलिखितः साधु सागरिके साधु अथवा न कमलाकरं वर्ज्जयित्वा राजहंसी अन्यस्मिन्नभिरमते। कमलाकरं पद्मबहुलं जलाशयम् ॥२०॥

सागेति। सवाष्पं साश्रु। वाष्पावुष्माश्रु इत्यमरः। आलिहिदो इत्यादि। आलिखितो मया एष किं पुनरनवरतनिपतद्वाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति। एष राजा। किं पुनः किन्तु। प्रभवति शक्नोति ॥२१॥

मुखमिति। उत्तानीकृत्य ऊर्द्धीकृत्य। कहमित्यादि। कथं प्रियसखी सुसङ्गता ॥२२॥

उत्थायेति। सखि सुसङ्गते इत उपविश ॥२३॥

सुसं । ( उपविश्य बलात् फलकमाकृष्य दृष्ट्वा च । ) सहि को एसो तुए आलिहिदो ॥२४

साग । ( सलज्जम् । ) पउत्तमअणमहूस्सवे भअवं अणङ्गो ॥२५

सुसं । ( सस्मितम् । ) अहो दे णिउणत्तणं किं उण सुसं विअ चित्तं पड़िभादि ता अहं पि आलिहिअ रदि-सणाहं करिस्सं ॥ ( वर्त्तिकां गृहीत्वा नाट्येन रतिव्यप-देशेन सागरिकामालिखति । )२६

साग । ( विलोक्य सक्रोधम् । ) सहि कीस तुए अहं एत्थ आलिहिदा ॥२७

सुसं । ( विहस्य । ) सहि किं अआरोणे कुप्पसि जा-दिसो तुए कामदेवो आलिहिदो तादिसी मए रदी आलि-

---

सुसमिति । सहीत्यादि । सखि क एष त्वया आलिखितः ॥२४॥

सागेति । पउत्तेति । प्रवृत्तमदनमहोत्सवे भगवाननङ्गः । प्रवृत्त आगतो यो मदनमहोत्सवस्तस्मिन् ॥२५॥

सुसमिति । अहो इत्यादि । अहो ते निपुणत्वं किं पुनः शून्य-मिव चित्रं प्रतिभाति । तदहमपि आलिख्य रतिसनाथं करिष्यामि । निपुणत्वं शिक्षितत्वम् । प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः । किं पुनः किन्तु । शून्यमिव नायिकाविरहादितिभावः । रतिसनाथं रतिः कामपत्नी तद्युक्तम् । ज्यां विशिखैः सनाथयन्निति-वत् तदासनाधोविश्वइत्यादि वञ्च सनाथशब्दस्य युक्तार्थे बहवः प्रयोगा दृश्यन्ते । रतिव्यपदेशेन रतिच्छलेन ॥२६॥

सागेति । सहीत्यादि । सखि कस्मात्त्वयाहमत्रालिखिता ॥२७॥

सुसमिति । सहीत्यादि । सखि किमकारणे कुप्यसि यादृश-स्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखितेति तदन्यथा

हिदात्ति ता अस्सधासंभाविणि किं तुह एदिणा आलबि-देण कहेहि सव्वं वुत्तन्तं ॥२८

साग। सलज्जा स्वगतम्।) णं जाणिदह्मि पिअस-हीए॥२९

(प्रकाशम्।) पिअसहि महदी क्खु मे लज्जा ता तहा करेसु जहा ण को वि अवरो एदं वुत्तन्तं जाणादि त्ति ॥३०

सुसं। सहि मा लज्ज ईदिसस्स कस्सारअणस्स अवस्सं एव्व ईदिसे बरे अहिलासेण होदव्वं तह बि जहा ण कोबि अबरो एदं वुत्तन्तं जाणिस्सदि तह करेमि। एदाए उण

---

सम्भाविनि किं तव एतेन आलपितेन कथय सर्व्वं वृत्तान्तम्। अन्यथा अन्यप्रकारेण प्रकाशात् रहस्यभेदः स्यादित्येवं प्रकारेण सम्भावयति मन्यते या सा अन्यथासम्भाविनी हे तथाभूते। एतेन सकपटेन। आलपितेन वाक्प्रयोगेण ॥२८॥

सागेति। स्वगतमनतिस्पष्टम्। णमित्यादि। ननु ज्ञातास्मि प्रियसख्या। ननुरवधारणार्थः। प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः। ज्ञाता राज्ञि सानुरागतयावगता ॥२९॥

प्रकाशमिति। सुस्पष्टमित्यर्थः। प्रियसखि महती खलु मे लज्जा तत् तथा कुरु यथा न कोपि अपर इमं वृत्तान्तं न जानातीति ॥३०॥

सुसमिति। सखीत्यादि। सखि मा लज्ज ईदृशस्य कन्यारत्नस्य अवश्यमेव ईदृशे वरे अभिलाषेण भवितव्यं तथापि यथा न कोपि अपर इमं वृत्तान्तं ज्ञास्यति तथाकरोमि। एतया पुनर्मेधाविन्यासारिकया अत्र कारणेन भवितव्यं कदापि एषा अस्य आलापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यतीति। कन्यारत्नस्य कन्याजातिषु श्रेष्ठायाः। जातौ जातौ यदुत्कृष्टं तद्रत्नमिति यादवः। वरे वरणीये। भवि-

मेहाविणीए सारिआए एत्थ कारणेण होदव्वं कदा वि एसा इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मन्तइस्सदि त्ति ॥[२१]

साग। (सोद्वेगम्।) सहि अदो वि मे अधिअदरं सन्दावो बाधेदि। (इति मदनावस्थां नाटयति।)[२२]

सुसं। (सागरिकाया हृदये हस्तं दत्त्वा।) सहि समस्सस समस्सस जाव इमाए दिग्घिआए णलिणीवत्ताणि मुणालिआं अ गेह्णिअ लहुं आअच्छामि ॥[२३]

---

तव्यमिति भावे तव्यः। मेधा धारणावती बुद्धिः। धीर्धारणावती मेधा इत्यमरः। तत्प्रशस्तिरस्या अस्तीति मेधाविनी तया। स्रङ्मेधा स्मायाद्विन् वेति विन्। मेधाविनीति सारिकाया यथार्थं नाम। अत्र रहस्यनिर्भेदे। कथमित्यपेक्षायामाह कदापीत्यादि गृहीताक्षरा स्मृतयथाभिहितवर्णा। अक्षरं ब्रह्मवर्णयोरिति मेदिनी। मन्त्रयिष्यति उच्चारयिष्यति ॥२१॥

सागेति। सखीत्यादि। सखि अतोपि मे अधिकतरं सन्तापो बाधते। अतः एतद्वृत्तान्तस्य अन्यगोचरीभावसम्भावनातः। अधिकतरमिति बाधनक्रियाविशेषणम्। मदनावस्थां कामजदाहम्। यदुक्तं गरुड़पुराणे। कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षय इति ॥२२॥

सुसमिति। सखीत्यादि। सखि समाश्वसिहि समाश्वसिहि यावदस्या दीर्घिकाया नलिनीपत्राणि मृणालिकाश्च गृहीत्वा लघु आगच्छामि। समाश्वसिहि सम्यक् सुस्था भव। आश्वासो निर्वृतौ मत इति विश्वः। निर्वृतिः सुस्थितिः। लघु शीघ्रम्। नलिनीपत्रादीनां दाहनिवारकत्वात् तद्युतया समाश्वासनम्। यदाह सुश्रुतः। शीतं विधानमत ऊर्ध्वमहं प्रवक्ष्ये दाहप्रशान्तिकरमृद्धिमतां नराणाम्। तत्वादितो मलयजेन हितः प्रदेहश्चन्द्रांशुहारतुहिनोदकशीत-

( निष्क्रम्य पुनः प्रविश्य च नाट्येन नलिनीपत्रैः शयनीयं मृणालवलयानि च रचयित्वा परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति ॥ )[२४]

साग। सहि अवणेहि इमाइं णलिणीवत्ताइं मुणालवलयाइं च अलं एदिणा कीस अक्कारणे अत्ताणं आआसेसि णं भणामि ॥[२५]

दुल्लहजणाणुराओ लज्जा गरुई परवसो अप्पा।
पिअसहि विसमं पेम्मं मरणं सरणं ण वारुक्कं ॥[२६]

---

खेन। शीतान्बु शीतालतरैश्च शयानमेवं हारैर्मृणालवलयैरवलाः स्पृशेयुः। भिन्नोत्पलोज्ज्वलहिमे शयने शयीत पत्रेषु वा सजलबिन्दुषु पद्मिनीनामित्यादि ॥२३॥

निष्क्रम्येति। शयनीयं शय्याम्। परिशिष्टानि शयनीय रचनावशिष्टानि ॥२४॥

सागेति। सहीत्यादि। सखि अपनय इमानि नलिनीपत्राणि मृणालवलयानि च अलमेतेन कस्मादकारणे आत्मानमायासयसि ननु भणामि। अपनय अपसारय। एतेन नलिनीपत्रादिभिर्दाहोपशमनेन। आयासयसि क्लेशयसि ॥२५॥

दुल्लहेति। दुर्लभजनानुरागो लज्जा गुर्व्वी परवश आत्मा। प्रियसखि विषमं प्रेम मरणं शरणं न वरमेकाम्। दुर्लभेदुःखेनासादनीये जने अनुरागो दुर्लभजनानुरागः। तथाच विदितानुरागोपि राजा न मां परिग्रहीष्यति स एव हि लोकैः कष्टेनासादनीय इति भावः। ननु त्वमेव स्वयमुपगत्यात्मानमासादय त इत्यत आह लज्जा गुर्व्वी महती। तथाच न कुलक्रमागतां लज्जामपहातुं शक्नोमीति भावः। तथा स्वजन एव त्वां तस्मै प्रतिपादयिष्यति चलभावेनेत्यत आह आत्मा परवशः अपरजनायत्तः न बन्धुजनायत्त इति यावत्। तथाच प्रतिपादकपित्रादिविरहान्न मां कोप्यस्मै प्रतिपादयिष्यतीति

( इति मूर्च्छति। )[३७]

सुसं। समस्सस्सु। पिअसहि साअरिए समास्सस समस्सस ॥[३८]

नेपथ्ये कलकलः ॥[३९]

कण्ठे कृत्वावशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥४०

भावः। हे प्रियसखि प्रेम विषमं तस्मिन् जने प्रणयसञ्चारोऽनुपयुक्तः अतो नवरं केवलं मरणमेकं शरणं नान्यदित्यर्थः। नवरं केवलार्थक-मिति त्रिकाण्डशेषः। इयं गाथा। उक्ता सा पिङ्गलेन। पढमं वारह मत्ता वीए अट्ठारहेहि संजुत्ता। जह पढमं तह तीअं दहपञ्च विहूसिआ गाहा इति ॥३६॥

इतीति। एवमुक्त्वेत्यर्थः। मूर्च्छतीति। इयं नवमी दशा। यदाह वात्स्यायनः। दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति। असति प्रत्युज्जीवने मरणस्यावर्णनीयत्वात् युद्धं राज्यभ्रंशो मरणं समरस्य रोधनं चैव। प्रत्यक्षाणि नवाङ्के प्रवेशकैः सन्विधेयानि इति भरतेन नाटकादौ विशेषतः प्रतिषेधाच्च अतैव विरहवर्णना समाप्तिः। मरणाकांक्षादेर्वर्णनीयत्वेपि प्रागेव तदुक्तौ युक्तत्वात् पूर्व्वश्लोके न तया वर्णितम्। तदुक्तं दर्पणे। रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायन्तु तद्वाच्यं चेतसा काङ्क्षितं तथा। वर्ण्यतेपि यदि प्रत्युज्जीवनं स्याददूरत इति ॥३७॥

सुसमिति। पिअसहीत्यादि। प्रियसखि सागरिके समाश्वसिहि समाश्वसिहि ॥३८॥

नेपथ्य इति। कलकलः कोलाहलः ॥३९॥

कण्ठ इति। कनकमयं हेममयमधोबद्धं शृङ्खलादाम कर्षन् द्विधाकुर्व्वन् अवशेषमवशिष्टं कण्ठे कृत्वा मन्दुराया वाजिशालायाः।

पुनस्तत्रैव ।४१

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृत
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥४२

वाजिशालातु मन्दुरेत्यमरः। प्रभ्रष्टः पलायित स्तथा हेलया अवज्ञया चलयो र्गच्छतो श्चरणयो रणन्ती शब्दायमाने किङ्किनीनां क्षुद्रघण्टिकानां चक्रवाले मण्डले यस्य सतथोक्तः। हेला स्त्रियामवज्ञायां विलासे वरयोषित इति मेदिनी। किङ्किनी क्षुद्रघण्टिकेति चक्रवाड़न्तु मण्डल मिति चामरः। एतयोः क्रायेणैरत्यध्यवङ्कारः। तथा अङ्गनानां स्त्रीणां दत्तभ्रमादित आतङ्कः शङ्का येनसः। रुक्तापशङ्कास्त्वातङ्क इत्यमरः। तथा अश्वपालैरश्वरक्षिभिः सम्भ्रमात् त्वरया अनुसृता अनुगता सरणिः पन्था यस्य सः। सम्भ्रमस्त्वरेति अयनं वर्त्म मार्गाध्वपन्थानः पदवीसृतिः। सरणिरितिचामरः। अयं प्लवङ्गो वानरो द्वाराणि क्रान्त्वा अतिक्रम्य नृपतेर्मन्दिरं प्रविशति। अत्र स्वभावोक्तिरलङ्कारः। यदुक्तं दर्पणे। स्वभावोक्तिर्दुरूहार्थ स्वक्रियारूपवर्णनमिति ॥४०॥

पुनरिति। तत्रैव नेपथ्यएव ॥४१॥

प्रभ्रष्टवानरदर्शनादन्तःपुरसहायानां नपुंसकादीनां भयक्रियां निर्द्दिशति नष्टमिति। वर्षवरैरन्तःपुरचारिभिर्नपुंसकैः। षण्ढोवर्षवरइत्यमरः। मनुष्यगणनाभावात् मनुष्येष्व गणनात् त्रपां लज्जामपास्य त्यक्त्वा नष्टं पलायितम्। नाशः पलायने प्रोक्तो निधनानुपलम्भयोरिति विश्वः। मनुष्याणामेव लज्जाभीरुत्वमिति भावः। स्त्रीपुंसयो रपत्यान्ता द्विचतुःषट्पदोरगाः। जातिभेदाः पुमाख्याश्चेत्यमरेण जातिवाचकशब्दानां स्त्रीपुंसमात्रवाचकत्वाभिधानात् क्लीबस्य मनुष्येष्वनन्तर्भाव उक्तः। तत्रहि मानुषोयं मानुषीयमित्युभय प्रयोग एव लिङ्गार्थसङ्कोचमन्तरेण नोपपद्यतइति बोध्यम्। अयं वामनस्त्रासात् कञ्चुकिनो अन्तःपुरचरवृद्धस्य कञ्चुकस्य अङ्गावरण

सुसं। (आकर्ण्य अग्रतोऽवलोक्य ससम्भ्रममुत्थाय सागरिकां हस्ते गृहीत्वा।) सहि उट्ठेहि उट्ठेहि एसो क्खु दुट्ठबाणरो इदो ज्जेव आअच्छदि ।४३

साग। किं ता दाणीं करेह्म ॥४४

सुसं। एहि इमस्सिं तमालविडवान्धआरे पविसिअ एदं अदिवाहेह्म ॥४५

---

वस्त्रस्य अन्तर्मध्ये विशति प्रविशति। पर्य्यन्तमङ्गनसीमानमाश्रयन्ते येते तथाभूतैः किरातैश्चाण्डालविशेषैर्निजस्य स्वीयस्य नाम्नो अन्तेवासि संज्ञायाः सदृशमनुरूपं कर्म्म कृतम्। अन्तेवासिनां पर्य्यन्ताश्रयणं युक्तमेवेति भावः। तथाचामरः। निषादश्वपचावन्तेवासि चाण्डाल पुक्कशाः। भेदाः किरातशवरपुलिन्दा म्लेच्छजातय इति। कुब्जा नीचतया नीचत्वेनैव हेतुना आत्मन ईक्षणं वानरकृतदर्शन माशङ्कन्ते येते तथोक्ताः सन्तः शनकैर्मन्दं मन्दं यान्ति। नीचानामेयातिभीरुत्वं नीचैः शिरशामतः स्वभावतो नीचाः कथमात्मदर्शनं नाश-ङ्केरन्निति भावः। वर्षवरादीनामन्तःपुर सहायत्वेन सततमङ्गन स्था-यित्वात् तेषामेव निर्द्देशः कृतः। उक्तं दशरूपके। अन्तःपुरे वर्षवराः किराता मूकवामनाः। म्लेच्छाभीरशकाराद्याः स्वस्वकार्य्योपयो-गिन इति। दर्पणेच। मन्त्रीस्यादर्थानां चिन्तायां तद्वदवरोधे वामन षण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्या इति। वर्षवरकस्य किनो-र्लक्षणमाह भरतः। येत्वल्पसत्त्वाः क्लीबाः क्लीवाश्च स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्य्येतु ते वैवर्षवराः स्मृताः। ये विद्यासत्यसम्पन्नाः कामदोषविवर्ज्जिताः। ज्ञानविज्ञानकुशलाः काञ्चुकीयास्तु ते स्मृता इति। अत्र स्वभावोक्तिरलङ्कारः ॥४२॥

सुसमिति। सहीत्यादि। सखि उत्तिष्ठ उत्तिष्ठ एष खलु दुष्ट वानर इत एवागच्छति ॥४३॥

सागेति। किमित्यादि। किं तदिदानीं कुर्म्मः। तत् तदा ॥४४॥

सुसमिति। एहीत्यादि। एहि अस्मिन् तमालविटपान्धकारे

उभे परिक्रम्य सभयं पश्यन्त्यौ एकान्ते पर्य्यवस्थिते॥४६

साग। सुसङ्गदे कहं तुए चित्तफलओ उज्झिदो कदावि कोवि तं पेक्खदि॥४७

सुसं। अइ सुप्पिदे किं अज्जवि चित्तफलएण करिस्ससि एसो वि दहिभत्तलम्पडो एदं पञ्जरं उग्घाडिअ दुट्ठवाणरो अदिक्कन्तो एसा वि मेहाविणी उड्डीणा अस्सदो गच्छदि ता एहि लहुं अणुसरेम्ह इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मन्तइस्सदि॥४८

साग। सहि एव्वं करेम्ह। ( इति परिक्रामतः ) ॥४९

नेपथ्ये॥ ही ही भोः अच्चरिअं अच्चरिअं॥५०

साग। ( विलोक्य। ) सुसङ्गदे जाणीअदि णं पुणोवि दुट्ठवाणरो ज्जेव्व आअच्छदि त्ति॥५१

---

प्रविश्य एनमतिवाहयावः। तमालस्य विटपेन शाखाप्रशाखाविस्तारेण योऽन्धकारस्तस्मिन्। अतिवाहयावो यापयावः॥४५॥

उभेइति। एकान्ते निर्ज्जने। एकान्तं स्वीवमत्यर्थे निर्ज्जने तद्युते त्रिष्विति शब्दाब्धिः॥४६॥

सागेति। सुसङ्गदे इत्यादि। सुसंगते कथं त्वया चित्रफलक उज्झितः कदापि कोपि तं प्रेक्षते॥४७॥

सुसमिति। अइ इत्यादि। अयि सुस्थिते किमद्यापि चित्रफलकेन करिष्यसि एषोपि दधिभक्तलम्पट एतं पञ्जर मुद्घाट्य दुष्टवानरो अतिक्रान्तः एषा खलु मेधाविनी उड्डीना अन्यतो गच्छति तदेहि लघु अनुसरावः अस्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यति अद्यापि अधुना। दधिभक्तलम्पटस्तन्नामा। उद्घाट्य विवृतद्वारं कृत्वा अतिक्रान्तो गतः। मेधाविनी सारिका॥४८॥

सागेति। सहीत्यादि। सखि एवं कुर्व्वः॥४९॥

नेपथ्यइति। हीहीत्यादि। हीहीभो आश्चर्य्य माश्चर्य्यम्। हीही विस्मये। हीहीशब्दो विस्मयहास्ययोरिति मेदिनी॥ ५०॥

सुसं। (दृष्ट्वा विहस्य।) अइ कादरे ण भेहि भट्टिणो परिवासवत्ती क्खु एसो अज्ज वसंतओ ॥[५२]

(ततः प्रविशति वसन्तकः)॥[५३]

वस। ही ही भोः अच्चरिअं अच्चरिअं साहु रे सिरिखण्डदास धम्मिअ साहु ॥[५४]

साग। (सस्पृहमवलोक्य।) सहि सुसङ्गदे दंसणीओ क्खु अअं जणो ॥[५५]

सुसं। सहि सुत्थिदे किं एदिणा दिट्ठेण दूरीभूदा क्खु सारिआ ता एहि अणुसरेह्म ॥[५६]

वस। साहु रे सिरिखण्डदास धम्मिअ साहु जेण इत्तअमेत्तेण एव्व तेण दोहएण इदिसी णोमालिआ सम्बुत्ता जेण निरन्तरव्भिसकुसुमगुच्छसोहिअविड़वा

---

सागेति। सुसमित्यादि। सुसङ्गते धायते ननु पुनरपि दुष्ट वानर एवागच्छतीति। ननुः प्रश्ने ॥५१॥

सुसमिति। अप इत्यादि। अयि कातरे न बिभीहि भर्त्तुः पार्श्व परिवर्त्ती खलु एष आर्य्यवसन्तकः। कातरे अधीरे। अधीरे कातर इत्यमरः ॥५२॥

ततइति सुगमम् ॥५३॥

वसेति। हीहीत्यादि। हीही भो आश्चर्य्यमाश्चर्य्यम्। साधुरे श्रीखण्डदास धार्म्मिक साधु। साध्विति ततमित्यध्याहर्त्तव्यक्रिया विशेषणम्। रे सम्बोधने। भो रे हेहोपिचामन्त्रे इति धनञ्जयः ॥५४॥

सागेति। सस्पृहं साभिलाषम्। सहीत्यादि। सखि दर्शनीयः खल्वयं जनः ॥५५॥

सुसमिति। सहीत्यादि। सखि सुस्थिते किमनेन दृष्टेन दूरीभूता खलु सारिका तदेहि अनुसरावः। किं कार्य्यमितिशेषः। अनुसरावः सारिकामनुगच्छावः ॥५६॥

उवहसन्ती विअ लक्खीअदि देवीपरिगहिदं माहवीलदं ता जाव गदुअ पिअवअस्सस्स णिवेदेमि ॥५७

(परिक्रम्यावलोक्य च।) एसो क्खु पिअवअस्सो तस्स दोहदस्स लद्धपच्चअदाए परोक्खं वि तं णोमालिअं पच्चक्खं विअ कुसुमिदं पेक्खन्तो हरिसुप्फुल्ललोअणो इदो एव्व आअच्छदि। ता जाव णं उवसप्पामि। इति राजानं प्रति निर्गतः ॥५८

ततः प्रविशति यथानिर्दिष्टो राजा ॥५९

---

यथेति। साहु इत्यादि। साधु रे श्रीखण्डदास धार्म्मिक साधु येन दत्तमात्रेणैव तेन दोहदेन ईदृशी नवमालिका संवृत्ता येन निरन्तरोद्भिन्नकुसुमगुच्छशोभितविटपा उपहसन्तीव लक्ष्यते देवीपरिगृहीतां माधवीलतां तद्यावद्गत्वा प्रियवयस्यस्य निवेदयामि। दोहदेन द्रव्यादीनां प्रसवकारणसंस्कारेण। येन सादृशेन भावेन निरन्तरमुद्भिन्नैरुद्गतैः कुसुमगुच्छैः पुष्पस्तबकैः शोभिता विटपाः पल्लवा यस्याः सा तथाभूता सती। विटपः पल्लवे स्तम्बे इति त्रिकाण्डशेषः। देव्या परिगृहीतां पालितां माधवीलतामुपहसन्तीव लक्ष्यते, नवमालिका ईदृशी एवम्भूता संवृत्ता ॥५७॥

परीति। एसो इत्यादि। एष खलु प्रियवयस्य स्तस्यदोहदस्य लब्धप्रत्ययतया परोक्षामपितां प्रत्यक्षामिव कुसुमितां प्रेक्षमाणः हर्षोत्फुल्ललोचन इतएवागच्छति तद्यावदेनमुपसर्पामि। तस्य श्रीखण्डदासोदितस्य। दोहदस्य द्रव्यादीनामकालप्रसवकारण संस्कारद्रव्यस्य। लब्धप्रत्ययतया जातविश्वासतया। प्रत्ययोऽधीन शपथज्ञानविश्वासहेतुष्वित्यमरः। अक्षाणामिन्द्रियाणां परः परा इति परोक्षा ताम्। पर इत्यस्य परः शतादिवत् सान्नाय्ययत्वेन व्यं पूर्वमिति पूर्वनिपातः। अक्षमिन्द्रियमित्यमरः। हर्षेणानन्देन उत्फुल्लं विकसितं लोचनं यस्य सतथोक्तः। राजानं प्रतिराजानं लक्षीकृत्य। प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगत इत्यमरः ॥५८॥

राजा । सहर्षम् ॥६०

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवम्
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥६१

---

तत इति । सुगमम् ॥५९॥

राजेति । सुगमम् ॥६०॥

उद्दामेति । उद्दामा उद्गता उत्कलिका ऊर्ध्वमुखाः कलिकाः कोरका यस्याः सा ताम् । कलिका कोरकः पुमानित्यमरः । नारीपक्षे उद्दामा अनिवार्य्या उत्कलिका उत्कण्ठा यस्याः सा ताम् । उत्कण्ठोत्कलिकासमे इत्यमरः । विपाण्डुरा पाण्डुवर्णा रुक्रुचिर्यस्याः सा ताम् । नवमालिकायाः पुष्पोद्गमात् नार्य्यास्तु भवेद्व्याधि स्तथाष्टमे इति भरतोक्ताष्टममदनावस्थत्वात् पाण्डुवर्णत्वम् । तथाच दर्पणे । व्याधिस्तु दीर्घनिश्वासपाण्डुताकृशतादय इति । आवद्धः प्रवर्त्तितो जृम्भो विकाशः पक्षे जृम्भणं यया सा ताम् । जृम्भो विकाश जम्भणयो-रिति मेदिनी । अविरलैरनवरतैः श्वसनोद्गमैः अनिलोद्गमै र्हेतुभिः पक्षे निश्वासप्रवाहैः करणैरात्मन आयासम् आयस्ततां तेजितत्वमिति यावत् गन्धोद्गमातिरेकादिति भावः । पक्षे क्लेशम् आतन्वतीं प्रकाशयन्तीम् । आयस्तस्तेजिते तीक्ष्णे इति त्रिकाण्डशेषः । तथा मदनेन वसन्तसमयेन पक्षे कामेन सह वर्त्तमानाम् । मदनःस्मरधुस्तूरवसन्तः द्रुम सिक्थके इति विश्वः । अन्यां नारीमिव इमामुद्यानलतां नवमालिकां पश्यन् ध्रुवं निश्चितं देव्या वासवदत्तायामुखं कोपेन विपाटला अतिपाटलवर्णा द्युतिः कान्तिर्यस्य तत् तथाभूतं करिष्यामि । देव्या मत्परिगृहीतनवमालिकया अकालपुष्पप्रसवशोभातिरेकेण परिगृहीताया माधवीलताया न्यक्कारादितिभावः । तादृश नायिकान्तर दर्शनेन देव्या मुखं यथा तादृशं भवतीत्युपमा निवेशेन अनन्तरं राज्ञः सागरिका दर्शनमपि सूचितम् । इयं पूर्णोपमा ॥६१॥

विदूषकः। (सहसोपसृत्य।) जअदु जअदु पिअवअस्सो भो वअस्स दिट्ठिआ वड्ढसि। (जेण दिस्समेत्तेणेति पुनः पठति)॥६२

राजा। वयस्य कः सन्देहः अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः। पश्य॥६३

दृष्ट्वा श्रीपुरुषोत्तमस्य समरे कण्ठे मणिं शत्रुभि
र्नष्टं मन्त्रबलैर्वसन्ति वसुधामूले भुजङ्गा हताः।
पूर्वं लक्ष्मणवीरवानरभटा ये मेघनादाहताः
पीत्वा तेऽपि महौषधेर्गुणनिधेर्गन्धं पुनर्जीविताः॥६४

---

विदूइति। सहसा अतर्कितम्। अतर्किते तु सहसेत्यमरः। जअदुइत्यादि। जयति जयति प्रियवयस्यः भोवयस्य दिष्ट्यावर्द्धसे। दिष्टेरित्यानन्दसूचकम्। दिष्ट्यासमुपजोषञ्चेत्यानन्दे इत्यमरः। वर्द्धसे अभ्युदयवानसि। वृद्धिरभ्युदयोऽस्त्रियामित्यमरः। जेणेत्यादि येन दत्त मात्रेणैव तेन दोहदेन इत्यादि पुनः पठति॥६२॥

राजेति। अचिन्त्यो अनिर्व्वचनीयः प्रभावः शक्तिः। प्रभावः शक्तितेजसोरितिविश्वः। मणिमन्त्रौषधीनामचिन्तनीयप्रभावं दर्शयति पश्येति॥६३॥

दृष्टेति। समरे युद्धे श्रीपुरुषोत्तमस्य जनार्द्दनस्य कण्ठे मणिं दृष्ट्वा शत्रुभिर्नष्टं पलायितम्। तथा भुजङ्गाः सर्पाः मन्त्रबलैर्मन्त्रप्रभावैर्हताः पराभूताः सन्तो वसुधामूले भूतलेवसन्ति। तथा पूर्व्वं रामरावणसमरावसरे ये लक्ष्मणवीरः सौमित्रिर्वानरभटा वानरयोद्धारश्च मेघनादेन रावणात्मजेन हताः शक्त्या अस्त्रेण ताडितास्तेऽपि गुणा उज्जीवनप्रभृतिशक्तयो निधीयन्ते यस्याः। ढाड्डे इति किः। तस्या महौषधे र्विशल्यकरण्यादेः। तथाच रामायणे हनूमन्तं प्रति। पूर्व्वन्तु कथितो योसौ वीर जाम्बवता तव। दक्षिणे शिखरे जातां महौषधिमिहानय। विशल्यकरणीं नाम्ना सावर्ण्यकरणीं

तदादेशय मार्गं येन वयमद्य तदवलोकनेन चक्षुषः फलमनुभवामः ॥६५

विदू। (साटोपम्।) एदु एदु भवं ॥६६

राजा। गच्छाग्रतः। ६७

उभौ। (सगर्व्वं परिक्रामतः।)६७

विदू। (आकर्ण्य सभयं निवृत्य राजानं हस्ते गृहीत्वा ससम्भ्रमम्।) भो वअस्स एहि पलाअम्ह ॥६८

राजा। किमर्थम् ॥७०

विदू। भो एदस्सिं बउलपादवे कोवि भूदो पड़िवसदि ॥७१

---

तथा। संजीवकरणीं वीर सन्धानीञ्च महौषधीमिति। गन्धं पीत्वा आघ्राय पुनर्ज्जीविताः मृतप्राया अपि उत्थिताः। रामायणे। विशल्यः समाघ्राय लक्ष्मणः परवीरहा। विशल्योविरुजः शीघ्रमुदतिष्ठन्महीतलादिति ॥६४॥

तदिति। वयमिति अविशेषणास्मादइति वक्तव्यादेकत्वेपि बहुवचनम्। चक्षुषः फलं रम्यवस्तुदर्शनजनितं सुखम् ॥६५॥

विदू इति। साटोपं आवेशेन सहितं यत्नेनेति यावत्। आवेशाटोपसंरम्भा इति त्रिकाण्डशेषः। एदु एदु भवम् एतु एतु भवान् ॥६६॥

राजेति। सुगमम् ॥६७॥

उभाविति। राजविदूषकावित्यर्थः ॥६८॥

विदूइति। भो इत्यादि। भो वयस्य एहि पलायावहे ॥६९॥

राजेति। सुगमम् ॥७०॥

विदूइति। भो इत्यादि। भो एतस्मिन् वकुलपादपे कोपि भूतः प्रतिवसति। भूतः पिशाचादिः ॥७१॥

राजा । धिङ्मूर्ख विस्रब्धं गम्यतां कुत ईदृशानामत्र प्रभावः ॥ ७२

विदू । फुड़क्खरं एव्व मन्तेदि जइ मम बअणं ण पत्तिआअसि ता अग्गदो भविअ सअं एव्व आअसेहि ॥ ७३

राजा । ( तथा कृत्वा श्रुत्वा च । ) ७४

स्पष्टाक्षरमिदं तावन्मधुरं स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका ॥ ७५

( ऊर्द्ध्वं निरूप्य निपुणमवलोक्य । ) कथं सारिका ॥ ७६

विदू । ( विचार्य्य । ) कधं सच्चं एव्व सारिआ ॥ ७७

राजा । (सस्मितम् ।) वयस्यैवम् ॥ ७८

---

राजेति । धिगिति निर्भर्त्सने । विस्रब्धं न भूत एवेति विश्वास-युक्तं यथास्यात्तथा । ईदृशानां पिशाचादीनाम् । अत्र मदालये ॥ ७२॥

विदूइति । फुड़ेत्यादि । स्फुटाक्षरमेव मन्त्रयति यदि मम वचनं न प्रत्येषि तदग्रतोभूत्वा स्वयमेवाकर्णय । स्फुटं व्यक्तमक्षरं वर्णो यत्र तत् । प्रत्येषि विश्वसिषि । अग्रतः पुरःस्थितः ॥ ७३॥

राजेति । सुगमम् ॥ ७४॥

स्पष्टेति । स्पष्टाक्षरं सुव्यक्तवर्णं तथा स्त्रीस्वभावतो मधुरं तथा अल्पाङ्गत्वात् क्षुद्रपक्षित्वात् अनिर्ह्रादि मृदुस्वरमिदं तावत् सारिका वदति इत्यहं मन्ये सम्भावयामि ॥ ७५॥

ऊर्द्ध्वमिति । उपरिष्टादित्यर्थः । निरूप्य अवधार्य्य । निपुणमनन्यचित्तम् ॥ ७६॥

विदूइति । कधमित्यादि । कथं सत्यमेव सारिका ॥ ७७॥

राजेति । एवं इत्यम् । इवेत्थमर्थयोरेवमित्यमरः ॥ ७८॥

विदूइति । भो इत्यादि । भो वयस्य त्वं भीरुः येन सारिकां भूतेति, मन्त्रयसि ॥ ७९॥

विदू। भो वअस्स तुमं सम्भालुआ जेण सारिअं भूदेत्ति मन्तेसि ॥७९

राजा। धिङ्मूर्ख यदात्मना कृतं तन्मयि सम्भावयसि ॥८०

विदू। भो जदू एव्वं मा क्खु मं णिवारेहि ॥८१

(सरोषं दण्डकाष्ठमुद्यम्य।) आः दासीए धीए तुमं जाणासि सच्चं एव्व वसन्तओ भाअदि त्ति ता चिट्ठ दाव मुहुत्तं जाव इमिणा पिसुणजणहिअअकुड़िलेण दण्डअट्ठेण परिपक्कं विअ कइत्थफलं इमादो वउलपादवादो आहणिअ भूमिए पाड़इस्सं। (इति हन्तुमुद्यतः।)८२

राजा। (निवारयन्।) मूर्ख किमप्येषा रमणीयं

---

राजेति। आत्मना यत्कृतं सारिकायां भतत्वावधारणमित्यर्थः। सम्भावयसि मन्यसे ॥८०॥

विदूइति। भो इत्यादि। भो यद्येवं माखलु मां निवारय ॥८१॥

सरोषमिति। दण्डकाष्ठं काष्ठमयदण्डम्। आ इत्यादि। आः दास्याःपुत्रि त्वं जानासि सत्यमेव वसन्तकोऽभिभतीति तत् तिष्ठ तावन्मुहूर्त्तं यावदनेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन परिपक्वमिव कपित्थफलमस्मात् वकुलपादपादाहत्य भमौ पातयिष्यामि। आः कोपे। आस्तु स्यात् कोपपीड़योरित्यमरः। दास्याःपुत्रीति सम्बोधनमपकर्षसूचकम्। पिशुनेति। पिशुनजनस्य खलजनस्य हृदयं मन इव कुटिलं वक्रं तेन। पिशुनो दुर्ज्जनः खल इत्यमरः। पक्वं कपित्थफलं यथा आहतिमात्रेणैवायासं विना भमौ पातयति तथेत्यर्थः ॥८२॥

व्याहरति तत्किमेनां त्रासयसि शृणुवस्तावत् ॥[८३]

( उभावाकर्णयतः । )[८४]

विदू । एवं भणादि इमस्स बह्मणस्स भोअणं दिज्जे त्ति ॥[८५]

राजा । सर्व्वमप्यौदरिकस्याभ्यवहार एव पर्य्यवस्यति तत्सत्यं वद किमालपति सारिका ।[८६]

विदू । ( आकर्ण्य । ) भो वअस्स सुदं तुए जं एदाए मन्तिदं एसा भणादि सहि कीस तुए अहं एत्थ आलिहिदा सहि किं अआरणे कुप्पसि जादिसो तुए कामदेवो आलिहिदो तादिसी मए रइ आलिहिदेत्ति भो वअस्स किं णेदं ॥[८७]

---

राजेति । व्याहरति वदति । किं कथम् ॥८३॥

उभाविति । सुगमम् ॥८४॥

विदूइति । एव्वमित्यादि । एवं भणति अस्य ब्राह्मणस्य भोजनं देहीति । भुज्यते यत्तत् भोजनमन्नादि ॥८५॥

राजेति । औदरिकस्य उदरपरायणस्य । अभ्यवहार एव भोजन एव । अभ्यवहृतान्नजग्धपस्तग्लस्ताशितं भुक्त इत्यमरदर्शनात् । पर्य्यवस्यति परिसमाप्नोति । सत्यम् अलं परिहासेनेति भावः ॥८६॥

विदूइति । भो इत्यादि । भो वयस्य श्रुतं त्वया यदेतया मन्त्रितम् एषा भणति सखि कस्मात्त्वयाहमत्रालिखिता सखि किमकारणे कुप्यसि यादृशस्त्वया कामदेव आलिखित स्तादृशीमया रतिरालिखितेति । भो वयस्य किमिदम् । सखि कस्मादित्यादि सागरिकावाक्यम् । सखि किमित्यादि सुसङ्गतावाक्यम् सारिका पठति । भो इत्यादि आदावन्ते च विदूषक वाक्यम् ॥८७॥

राजा । वयस्य एवं तर्कयामि कयापि हृदयवल्लभो-ऽनुरागादभिलिख्य कामव्यपदेशेन सखीपुरतोऽपह्नुतः तत्सख्यापि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तत्रालिख्य रतिव्यपदेशेन दर्शितेति ॥[८८]

विदू । ( छोटिकां दत्त्वा । ) भो वअस्स जुज्जदि क्खु एदं ॥[८९]

राजा । भो वयस्य तूष्णीं भव पुनरपि व्याहरति तच्छृणुवस्तावत् ॥[९०]

( उभावपि शृणुतः । )[९१]

विदू । भो पुणोवि एसा एव्वं भणादि सहि मा लज्ज ईदिसस्स कण्णारअणस्स अवस्सं एव्व ईदिसे वरे अहि-लासेण होदव्वं । ता जा एसा आलिहिदा सा क्खु कण्णा दंसणीआ ॥[९२]

---

राजेति । हृदयवल्लभो मनःप्रियः । अपह्नुतो अपलपितः । प्रत्यभिज्ञाय आलिखितं जनमयुक्तोयमिति निश्चित्य । वैदग्ध्यात्शिल्पि-नैपुण्यात् । असौ यया पूर्वं हृदयवल्लभ आलिखितः सा । रतिव्यप-देशेन रतिच्छलेन । रतिरियमित्युक्तेति यावत् ॥८८॥

विदूइति । छोटिकामङ्गुलिशब्दम् । भो इत्यादि । भो वयस्य युज्यते खल्विदम् ॥८९॥

राजेति । तष्णीम्भव मौनभावं प्राप्नुहि । मौने तु तष्णीमित्य-मरः ॥९०॥

उभाविति । सुगमम् ॥९१॥

विदूइति । भो इत्यादि । भोः पुनरप्येषा एवं भणति । सखि मालज्ज ईदृशस्य कन्यारत्नस्य अवश्यमेव ईदृशे वरे अभिलाषेण भवितव्यम् ।

राजा। यद्येवमवहितौ शृणुवस्तावत्। अस्त्यत्राव-काशो नः कुतूहलस्य ॥८३

विदू। भो वअस्स मा पण्डिअगव्वं उव्वह अहं दे एदाए मुहादो सुणिअ सव्वं वाक्खाणइस्सं। (इत्यु-भावाकर्णयतः।)८४

विदू। भो वअस्स सुदं तुए जं एदाए मन्तिदं सहि अवणेहि मे इमाइं णलिणीपत्ताइं मुणालवलआइं च अलं एदिणा कीस अआरणे अत्ताणं आआसेसि ॥८५

राजा। वयस्य न केवलं श्रुतमभिप्रायोऽपि लक्षितः ॥८६

---

तत् या एषा आलिखिता सा खलु कन्या दर्शनीया। तदित्यादि पुनर्विदूषकोक्तिः। तत् तस्मात् कन्यारत्नत्वादिति यावत् ॥८२॥

राजेति। यदि एवं यदि सा कन्या दर्शनीयेत्यर्थः। अवहितौ साभिनिवेशौ। अत्र कन्यारत्ने नो अस्माकं कौतूहलस्य दर्शनाभिलाषस्य अवकाशो अवसरो अस्ति। अलमिदानीं दर्शनाभिलाषेणेत्यर्थः। रम्यवस्तु समालोके लोलता स्यात् कुतूहलमिति ॥८३॥

विदूइति। भो इत्यादि। भो वयस्य मा पण्डितगर्व्वमुद्वह अहं ते एतस्या मुखात् श्रुत्वा सर्व्वं व्याख्यास्यामि। पण्डितगर्व्वं पाण्डित्याभिमानम्। व्याख्यास्यामि प्रकाशयिष्यामि। इति एतत् परमित्यर्थः ॥८४॥

विदूइति। भो इत्यादि। भो वयस्य श्रुतं त्वया यदेतया मन्त्रितं सखि अपनय मे इमानि नलिनीपत्राणि मृणालवलयानि च अलमेतेन कस्मादकारणे आत्मान मायासयसि। सखीत्यादि सागरिकावाक्यं सारिका पठति ॥८५॥

राजेति। अभिप्राय इति। स्मरदशोपलक्षितौ कामजदाहोप-

विदू । भो वअस्स अज्ज वि कुरकुराअदि एव्व एसा सारिआ दासीए धीआ ता सव्वं सुणिअ वा क्खाण इस्सं ॥९७

राजा । युक्तमभिहितम् । ( पुनराकर्णयतः ॥)९८

विदू । भो वअस्स एसा क्खु सारिआ दासीए दुहिदा चउव्वेदी वह्मणोविअ रिचाइं भणिदुं पउत्ता ॥९९

राजा । वयस्य कथय किमप्यन्यचेतसा मया नावधारितं किमनयोक्तमिति ॥१००

विदू । भो एव्वं भणादि ।॥१०१

दुल्लहजण अनुराओ लज्जा गुरुई परव्वसो अप्पा ।

---

शमनाय अस्या अङ्गेषु सख्या अर्पितानि नलिनीपत्रादीनि दाहं न शमयन्तीतिभावः । लक्षितेऽनुमितः ॥९६॥

विदूइति । भो इत्यादि । भो वयस्य अद्यापि कुरकुरायत एव एषा सारिका दास्याः पुत्री तत्सर्वं श्रुत्वा व्याख्यास्यामि । कुरकुरायत इति । कुरकुरशब्दं करोति । शब्दसुखकष्टादेः कतिवेदपापेङ्त इति ङ्यः ॥९७॥

राजेति । युक्तमुचितम् । अभिहितमुक्तम् ॥९८॥

विदूइति । भो इत्यादि । भो वयस्य एषा खलु सारिका दास्या-दुहिता चतुर्वेदी ब्राह्मण इव ऋचो भणितुं प्रवृत्ता । चत्वारो वेदा ऋग्यजुःसामाथर्वाख्याः सन्त्यस्येति चतुर्वेदी अधीतचतुर्वेद इति यावत् । ऋचः तेषाम्तक् यत्रार्थवशेन पादव्यवस्थितिरिति जैमिन्युक्त लक्षणान् वैदिकमन्त्रान् ॥९९॥

राजेति । अन्यस्मिन् चेतो मनो यस्य स तेन । नावधारितं न निरूपितम् ॥१००॥

विदूइति । भो इत्यादि । भो एवं भणति ॥१०१॥

पिअसहि विसमं पेम्मं मरणं सरणं नवरमेक्कं ॥१०२

राजा। (सस्मितम्।) वयस्य एवंविधं भवन्तं ब्राह्मणं मुक्त्वा कोऽन्य एवंविधानामर्थानामभिज्ञः ॥१०३

विदू॥ तदो किं ण एदं ॥१०४

राजा। ननु गाथिकेयम् ॥१०५

विदू। किं गाधिआ तदो किं कहिआ ॥१०६

राजा। वयस्य कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनिरपेक्षयोक्तम् ॥१०७

विदू। (उच्चैर्विहस्य।) भो किं एदेहिं वक्कभणिदेहिं उजुअं एव्व किं ण भणासि जह मं एव्व अणासादअन्तीए

---

दुल्लहेति। दुर्लभजनानुरागो लज्जागुर्वी परवश आत्मा। प्रियसखि विषमं प्रेम मरणं शरणं न वरमेकम्। इत्यन्तसारिकोक्तानि पूर्वं व्याख्यातानि ॥१०२॥

राजेति। मुक्त्वा वर्ज्जयित्वा। भवन्तं विनेत्यर्थः ॥१०३॥

विदू इति। राजवाक्यभङ्ग्या नैषा ऋगिति प्रतिपादितत्वादाह तदो इत्यादि। तदा किं नु इदम्। यदीयं न ऋक् तदेत्यर्थः॥१०४॥

राजेति। ननु भोः। गाथिका गाथा। तल्लक्षणं दुल्लहेत्यादि श्लोकव्याख्यावसरे उक्तम् ॥१०५॥

विदू इति। किमित्यादि। किं गाथिका तदा किं कथ्यताम्। किं कथ्यताम् एतेन किमुक्तं तत्कथ्यतामित्यर्थः ॥१०६॥

राजेति। श्लाघ्यं प्रशस्यं यौवनं यस्याः सा श्लाघ्ययौवना तया। अनासादयन्त्या अनाप्नुवत्या। जीवितनिरपेक्षया जीविते जीवने निर्नास्ति अपेक्षा आकाङ्क्षा यस्याः सा तया ॥१०७॥

विदू इति। भो इत्यादि। भोः किमेतैर्वक्रभणितैः ऋजुकमेव किं न भणसि यथा मामेवानासादयन्त्येति अन्यथा कोऽन्यः कुसुमचाप

त्ति अधवा को असो कुसुमचावव्ववदेसेण णिह्नवी अदि ।
( हस्ततालं दत्त्वा उच्चैर्विहसति ॥ )[१०८]

राजा । ( ऊर्द्ध्वमवलोक्य । ) धिङ्मूर्ख किमुच्चैर्विहसता त्वया तपस्विनी त्रासितेयं येनोड्डीय अन्यत्र क्वापि गता इति । ( निरूपयतः । )[१०९]

विदू । ( विलोक्य । ) भो वअस्स अधवा मा सन्ताभावेहि एसा कअलीघरं एव्व गदा ता एहि अणुसरेह्म ।
( इति परिक्रामतः । )[११०]

राजा । दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शुकशिशुसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥[१११]

---

व्यपदेशेन निह्नूयते । वक्रभणितैर्वक्रोक्तिभिः । ऋजकं सरलम् । अन्यो भवदितरः । कुसुमचापव्यपदेशेन कामच्छलेन निह्नूयते गोप्यते ॥१०८॥

राजेति । तपस्विनी शोचनीया । व्रतिशोच्यौ तपस्विनाविति त्रिकाण्डशेषः । इयं सारिका ॥१०९॥

विदू इति । भो इत्यादि । भो वयस्य अन्यथा मा सन्तापय एषा कदलीगृहमेव गता तदेहि अनुसरावः । एषा सारिका ॥११०॥

राजेति । दुर्वारामिति । दुःखेन वार्य्यते या तां कुसुमशरव्यथां कामजपीड़ां वहन्त्या धारयन्त्या कामिन्या सखीनां पुरः अग्रतो यदभिहितमुक्तं भूयः पुनः शुकशिशुसारिकाभिरुक्तं तद्वचनं धन्यानां पुण्यवताम् । सुकृती पुण्यवान् धन्य इत्यमरः । श्रवणस्य पन्थाः श्रवणपथः । पथ्यप्पुरः से इत्यः । कर्ण इति यावत् । तस्य अति-

विदू। भो वअस्स एदं क्खु कअलीघरं जाव पविसह्म ॥ ( इत्युभौ प्रविशतः। )११२

विदू। भो अलं दाव दासीए धीआए सारिआए अण्णेसणपअत्तेण इध दाव मलअमारुदुव्वेलन्तबालकअलीदलसीअले उवविसिअ मुहुत्तअं वीसह्म ॥११३

राजा। ( यदभिरुचितं भवते। इत्युपविशतः ॥ )११४

राजा। ( निश्वस्य दुर्व्वारामिति पुनः पठति ॥ )११५

विदू। ( पार्श्वतोऽवलोक्य। ) भो वअस्स एदेण उग्-

यित्वं तदागतत्वम् एति प्राप्नोति। तद्वचनस्य दूरमास्तां साक्षात्कृवर्ण्णच्छिभिरुच्चरितं पुनस्तद्वचनं येषां कर्णगोचरी भवति ते धन्या इति भावः। प्रहर्षिणी वृत्तम्। तदुक्तम्। त्र्याशाभिर्म्मनजरगाः प्रहर्षिणीयमिति ॥१११॥

विदू इति। भो इत्यादि। भो वयस्य इदं खलु कदलीगृहं यावत् प्रविशावः ॥११२॥

विदू इति। भो इत्यादि। भो अलं तस्या दास्याः पुत्र्याः सारिकाया अन्वेषणप्रयत्नेन इह तावत् मलयमारुतोद्वेल्लद्बालकदलीदलशीतले शिलातले उपविश्य मुहूर्त्तं विश्राम्यावः। मलयेति। मलयमारुतेन दक्षिणानिलेन उद्वेल्लत् सञ्चलत् यत् बालमभिनवं कदलीदलं तेन शीतले ॥११३॥

राजेति। यत्कर्म्मेतिशेषः कर्त्तृपदमेतत्। अभिरुचितमिति कर्त्तरिक्तः प्रीतिकरमित्यर्थः। भवते इति। क्रोधेर्ष्यारुचीत्युपादानात् रुच्यर्थयोगे चतुर्थी। तथाच यत्कर्म्म भवते अभिरुचितं भवतः प्रीतिकरं तत्कुर्म्म इत्यर्थः ॥११४॥

राजेति। सुगमम् ॥११५॥

विदू इति। भो इत्यादि। भो वयस्य एतेन उद्घाटितद्वारेण

घाड़िअदुवारेण दुट्टवानरेण ताए सारिआए पञ्जरेण होदव्वं॥११६

राजा। वयस्य निरूप्यताम्॥११७

विदू। जं भवं आणवेदि।११८

(परिक्रम्यावलोक्य च।) एसो वि चित्तफलओ जाव णं गेह्लामि। (गृहीत्वा निरूप्य च हर्षम् नाटयति।)११९

राजा। (सकौतुकम्।) वयस्य किमेतत्॥१२०

विदू। भो वअस्स दिट्ठिआ वड्ढसि एदं तं जं मए भणिदं तुमं जेव्व एत्थ आलिहिदो अस्सहा को असो कुसुमचावव्ववदेसेण णिह्लवीअदि त्ति॥१२१

राजा। सहर्षं हस्तौ प्रसार्य्य सखे दर्शय दर्शय॥१२२

---

दुष्टवानरेण तस्याः सारिकायाः पञ्जरेण भवितव्यम्। दुष्टवानरेण कर्त्रा उद्घाटितं प्रसारितं द्वारं यस्य तत् तेन॥११६॥

राजेति। निरूप्यतामवधार्य्यताम्॥११७॥

विदू इति। जमित्यादि। यद्भवानाज्ञापयति॥११८॥

परीति। एसो इत्यादि। एषोपि चित्रफलकः यावदेनं गृह्लामि। एनं चित्रफलकम्॥११९॥

राजेति। सकौतुकं किमिदमाप्तमनेनेति कौतूहलेन सहितम्॥१२०॥

विदू इति। भो इत्यादि। भो वयस्य दिष्ट्यावर्द्धसे इदं तत् यन्मया मन्त्रितं त्वमेवात्रालिखितः अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति। मया यन्मन्त्रितमुक्तम् इदं वस्तु तत् तस्यैव प्रमाणम्। किं मन्त्रितमित्यपेक्षायामित्यन्तम्॥१२१॥

राजेति। सुगमम्॥१२२॥

विदू। ण दे दंसइस्सं साबि कसात्रा एत्थ एव्व आलिहिदा त्ति किं पारिदोसिएण बिणा ईदिसं कसारअणं दंसीअदि॥१२३

राजा। कटकमर्पयन्नेव बलाद्गृहीत्वा पश्यति॥१२४

(विलोक्य सविस्मयं वयस्य पश्य॥१२५

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः।
मानसमुपैति केयं चित्रगता राजहंसीव॥१२६

अपिच।१२७

---

विदू इति णेत्यादि। न ते दर्शयिष्यामि सापि कन्यका अत्रैवालिखितेति किं पारितोषिकेण विना ईदृशं कन्यारत्नं दृश्यते। कुतो न दर्शयिष्यसीत्यत आह सापीत्यादि। इति हेतोरित्यर्थः॥१२३॥

राजेति। कटकं बलयम्। कटकं बलयोऽस्त्रियामित्यमरः। अर्पयन् ददत्॥१२४॥

विलोक्येति। सुगमम्॥१२५॥

लीलेति। लीलया क्रीड़या अवधूतं कम्पितं पद्मं यया सा। वरनार्यो लीलार्थं कमलमेकं पाणिना बिभ्रति। यथा हष्टं मेघदूते। हस्ते लीलाकमलमिति। रघुवंशेपि लीलारविन्दं भ्रमयाञ्चकारेति। राजहंसीपक्षे लीलया अवधूतानि कम्पितानि पद्मानि यया सा। अधिकम् अतिरिक्तं नो अस्माकं पक्षपातमनुरागं कथयन्ती प्रकाशयन्ती पक्षे कं जलम् अधिकृत्य पक्षपातं पक्षक्षेपं नो अस्मान् कथयन्ती प्रकाशयन्ती। कं शिरोऽम्बुनोरित्यमरः। चित्रगता आलेख्यगता पक्षे आश्चर्यगमना इयं का नारी राजहंसीव मानसं चित्तक्षेत्रं पक्षे सरो विशेषमुपैति विशति। इयं पूर्णोपमा। यदुक्तं काव्यादर्शे। यथाकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते। उपमा सेति। दर्पणे च। सा पूर्णा यदि सामान्यधर्म्मा औपम्य वाचिचेति॥१२६॥

अन्यदप्याह अपि चेति॥१२७॥

विधायापूर्व्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम्।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥१२८

( ततः प्रविशति सागरिका सुसङ्गता च। )१२९

साग। सहि सुसङ्गदे ण समासादिदा अह्मेहिं सारिआ ता चित्तफलअं पि दाव इमादो कअलीघरादो गेह्णिअ लहुं आअच्छह्म ॥१३०

सुसं। सहि एव्वं करेह्म। ( इत्युपसर्पतः। )१३१

विदू। भो वअस्स कीस उण सा ओणदमुही आलिहिदा ॥१३२

सुसं। ( आकर्ण्य। ) सहि जहा वसन्तओ मन्तेदि तहा तक्केमि भट्टिणा वि एत्थ एव्व होदव्वं ता कअली-

---

विधायेति। धाता स्रष्टा अपूर्व्वपूर्णेन्दुम् अपूर्व्वमद्भुतं पूर्णेन्दुं पूर्णचन्द्रात्मकं तस्या नार्य्यामुखं विधाय निर्म्माय ध्रुवं निश्चितं निजं स्वीयं यदा सनाम्भोजम् आसनरूपं पद्मं तस्य विनिमीलनेन मुद्रितभावेन दुःस्थितः दुःखेणस्थितो अभूत् ॥१२८॥

तत इति। सुगमम् ॥१२९॥

सागेति। सहीत्यादि। सखि सुसङ्गते न समासादितास्माभिः सारिका तत्चित्रफलकमपि तावदस्मात् कदलीगृहात् गृहीत्वा लघु आगच्छावः। समासादिता प्राप्ता ॥१३०॥

सुसमिति। सहि एव्वं करेह्म सखि एवं कुर्व्वः। उपसर्पत उपगच्छतः ॥१३१॥

विदू इति। भो इत्यादि। भो वयस्य कस्मात्पुनः सा अवनत मुखी आलिखिता। अवनतमुखी नम्रमुखी ॥१३२॥

सुसमिति। सहीत्यादि। सखि यथा वसन्तको मन्त्रयति तथा तर्कयामि भर्त्तापि अत्रैव भवितव्यं तत् कदलीगृहगुल्मान्तरिता भूत्वा-

घरगुम्मन्तरिदा भविम्र पेक्खह्म ॥ ( इत्युभे आकर्णयतः ॥[१३३]

राजा। वयस्य पश्य पश्य। ( विधायापूर्व्वं पूर्णेन्दुमित्यादि पुनः पठति ॥ )[१३४]

सुसं। सहि दिट्ठिआ वड्ढसि एसो दे हिअअवल्लहो तुमं ज्जेव्व वस्णेदि ॥[१३५]

साग। ( सलज्जम्। ) सहि कीस परिहाससीलदाए इमं जणं लहुं करेसि ॥[१३६]

विदू। ( राजानं चालयित्वा। ) णं भणामि कीस एसा ओणदमुही आलिहिदा ॥[१३७]

राजा। वयस्य सारिकयैव सकलमावेदितम् ॥[१३८]

सुसं। ( विहस्य। ) सहि दंसिदं सारिआए अत्तणो मेहावत्तणं ॥[१३९]

---

प्रेक्षावहे। यथा वयस्यपदामन्त्रणेनेत्यर्थः। भर्त्रा सन्निहितेनेतिशेषः। कदलीगृहगुल्मेन कदलीगृहस्तम्बेन अन्तरिता व्यवहिता ॥१३३॥

राजेति। अन्यमनस्कत्वात् विदूषकवाक्यमनाकर्ण्याह वयस्येति ॥१३४॥

सुसमिति। सहीत्यादि। सखि दिष्ट्या वर्द्धसे एष ते हृदयवल्लभ स्त्वामेव वर्णयति। दिष्ट्येत्यानन्दे। हृदयवल्लभो मनःप्रियः ॥ ३५॥

सागेति। सहीत्यादि। सखि कस्मात् परिहासशीलतया इमं जनं लघुं करोषि। परिहासे शीलं स्वभावो यस्यास्तया। इमं जनं मामित्यर्थः। लघुं सारशून्यम् ॥१३६॥

विदू इति। चालयित्वा हस्तेन स्पन्दयित्वा। णमित्यादि। ननु भणामि कस्मादेषा अवनतमुखी आलिखिता। ननु भोः ॥१३७॥

राजेति। सकलं मुखावनतिकारणादि। आवेदितं स्मरदशोपस्थितिप्रकाशादितिभावः ॥१३८॥

विदू। अवि सुहाअदि दे लोअणं ण वेत्ति ॥१४०

साग। (ससाध्वसम् स्वगतम्।) हद्धी हद्धी ण आणे किं एत्थ भणिस्सदि जं सच्चं एव्व मरणजीविदाणं अन्तरे वट्टामि ॥१४१

राजा। वयस्य सुखायत इति किमुच्यते ॥१४२

कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता।
मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥१४३

---

सुसमिति। सहीत्यादि। सखि दर्शितं सारिकया आत्मनो मेधावित्वम् ॥१३९॥

विदू इति। अवीत्यादि। अपि सुखायते ते लोचनं न वेति। अपिः प्रश्ने। गर्हा समुच्चय प्रश्न शङ्का सम्भावना स्वपीत्यमरः। सुखायते सुखमनुभवति। सुखशब्दात् शब्दसुखेतिक्यङः ॥१४०॥

सागेति। ससाध्वसं सभयम्। स्वगतमनति स्पष्टम्। होत्यादि। न जाने किमत्र भणिष्यति यत्सत्यमेव मरणजीवितयोरन्तरे वर्त्ते। अत्र वसन्तकप्रश्ने। मरणेति। न सुखायत इत्युक्तौ मरणं सुखायत इत्युक्तौ जीवनमितिभावः ॥१४१॥

राजेति। सुखायते इति किम् उच्यते किं पृच्छ्यते सुखायत एवेति भावः ॥१४२॥

लोचनस्य क्रिया प्रदर्शनया सुखानुभवमवगमयति कृच्छ्रादिति। कृच्छ्रात् कष्टात् अस्या ऊरुयुगं व्यतीत्य अतिक्रम्य नितम्बस्थले कट्याः पश्चाद्भागे। पश्चान्नितम्बः स्त्रीकट्या इत्यमरः। सुचिरं बहुकालं व्याप्य भ्रान्त्वा तिसृणां वलीनां तरङ्गैरूर्मिभिः विषमे उन्नतानते मध्ये मध्यदेशे निस्पन्दतां निर्निमेषतामागता प्राप्ता मद्दृष्टि र्ममलोचनं सम्प्रति

साग। (श्रुत्वा स्वगतम्।) हिअअ पसीद पसीद समस्सस समस्सस मणोरहो बि दे दाणिं एत्तिअं भूमिं गदो ॥१४४

सुसं। सहि सुदं तुए ॥१४५

साग। (विहस्य।) तुमं एव्व सुणु जाए आलेक्ख-विसासो वणीअदि ॥१४६

विदू। (फलकं निर्वर्ण्य।) भो बअस्स जस्स उण ईदिसीओ बि एव्वं पिअसमागमं बहु मसन्ति तस्स बि अत्तणो उवरि को पराहवो जेण एत्थ एव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि ॥१४७

---

इदानीं शनैर्मन्दं तङ्गौ स्तनावाकृष्य तृषितेव पिपासितेव जललवं जलकणं प्रस्यन्दयतः स्रावयत इति जललवप्रस्यन्दिनी लोचने चक्षुषी मुहुः पुनः पुनः साकाङ्क्षं सस्पृहमीक्षते। उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे इति। लवलेश कणाणव इतिचामरः ॥१४३॥

सागेति। हिअअ इत्यादि। हृदय प्रसीद प्रसीद समाश्वसिहि समाश्वसिहि मनोरथोपिते इदानीमेतावतीं भूमिं गतः। समाश्वसिहि सुस्थितं भव। मनोरथोऽभिलाषः। एतावतीमिति दृष्टजनस्य ज्ञानगोचरतां गत इत्यर्थः ॥१४४॥

सुसमिति। सहि सुदं तुए सखि श्रुतं त्वया ॥१४५॥

सागेति। तुममित्यादि। त्वमेव शृणु यस्या आलेख्यविन्यासो वर्ण्यते। आलेख्यविन्यासश्चित्रविन्यासः ॥१४६॥

विदू इति। निर्वर्ण्य निरीक्ष्य। निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः। भो इत्यादि। भो वयस्य यस्य पुनरीदृश्योपि एवं प्रियसमागमं बहुमन्यन्ते तस्यापि आत्मन उपरि कः पराभवः येन अत्रैव तया आलिखितमात्मानं न प्रेक्षसे। एवं ईदृश्यः रूपातिशय-

राजा । ( निर्वर्ण्य । ) वयस्य अनया लिखितोऽहमिति यत्सत्यमात्मन्येव बहुमानः तत्कथं न पश्यामि । पश्य ॥१४८

भाति पतितो लिखन्त्यास्तस्या वाष्पाम्बुशीकरकणौघः ।
स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि ॥१४९

विदू । ( पार्श्वतोऽवलोक्य । ) भो वअस्स एदं क्खु, ताए सरसकमलिणीदलमुणालविरइदं मअणावत्थासूअअं लक्खीअदि ॥१५०

राजा । वयस्य निपुणमुपलक्षितम् । तथाहि ॥१५१

परिम्लानं पीनस्तनजघनसङ्गादुभयत
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।

सम्पन्नाः । प्रियसमागमं पतित्वेन समागमम् । बहुमन्यन्ते आद्रियन्ते । पराभव स्तिरस्कारः । पराभवस्तिरस्कारे विनाशे चेति विश्वः । येन तिरस्कारेण ॥१४७॥

राजेति । बहुमान आदरः ॥१४८॥

भातीति । लिखन्त्या चित्रयन्त्यास्तस्या एष पतितो नेत्राद्भ्रष्टो वाष्पाम्बुनोऽश्रुसलिलस्य शीकरकणानामोघः समूहो मे मम वपुषि शरीरे करतलसंसर्गात् स्वेदोद्गमो घर्म्मोदय इव भाति प्रकाशते । ओघो वृन्देऽम्भसां रये इत्यमरः । स्वेदोद्गमः सात्त्विकभावः । अत्रोत्प्रेक्षालङ्कारः ॥१४९॥

विदू इति । भो इत्यादि । भो वयस्य इदं खलु तस्याः सरसकमलिनीदलमृणाल विरचितं मदनावस्थासूचकं लक्ष्यते । सरसं सजलं यत् कमलिनीदलं पद्मिनीपत्रं मृणालञ्च तत्विरचितं तद्विरचनम् । रसो जलं रसोहर्ष इत्यनेकार्थध्वनिमञ्जरी ॥१५०॥

राजेति । निपुणं साधु । उपलक्षितं दृष्टम् । मदनावस्थासूचकतां प्रमाणयति तथा हीति ॥१५१॥

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम्॥१५२
अपि च॥१५३
स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम्।
अतिशयपरितापम्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति॥१५४

---

परीति। स्तनौ च जघने कुचाः पुरोभागौ च एतेषां समाहारः स्तनजघनं पीनस्य स्थूलस्य स्तनजघनस्य सङ्गात् संयोगात् उभयतः प्रान्तद्वये परिम्लानं क्षीणकान्ति। म्लैकान्ति सङ्क्षये इति कविकल्पद्रुमः। तथा तनोः क्षीणस्य मध्यस्य मध्यदेशस्य परिमिलनं संयोगमप्राप्य अन्तर्मध्ये। अन्तः स्वीकारमध्ययोरिति मेदिनी। हरितं पालाशवर्णम्। पालाशो हरितो हरिदित्यमरः। तथा श्लथयोः शिथिलयो र्भुजलतयो र्बाहुलतयोः क्षेपेण वलनैः संस्थापनैर्व्यस्तो अन्योन्यसंयोगरहितो न्यासश्चास्तरणं यस्य तत् तथोक्तम्। इदं नलिनीपत्रस्य शयनं शय्या कृशाङ्ग्यास्तान्व्याः सन्तापं वदति प्रकाशयति। इदं शिखरिणीच्छन्दः। तदुक्तम्। रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति॥१५२॥

अन्यदप्याह अपि चेति॥१५३॥

स्थितमिति। उरसि वक्षसि स्थितमेतत् विशालं दीर्घम् पद्मिनीपत्रम् अतिशयेन परितापो अतिशयपरिताप स्तेन म्लापिताभ्यां म्लानिं गमिताभ्यां मण्डलाभ्यां मण्डलाकारचिह्नाभ्यां कारणाभ्याम् अस्याः स्तनयुगस्य परिणाहं विशालताम्। परिणाहो विशालतेत्यमरः। यथा ब्रवीति प्रकाशयति तथा अन्तर्मध्ये मन्मथोत्थां कामोद्भूतामवस्थां दशां न कथयति प्रकाशयति। म्लापिताभ्यामिति। म्लै-

विदू। (नाट्येन मृणालिकां गृहीत्वा।) भो वअस्स अअं क्खु अवरो ताए ज्जेव्व पीणत्थणक्खलणकिलिसन्तकोमलमुणालहारो ता पेक्खदु भवं ॥१५५

राजा। (गृहीत्वोरसि विन्यस्य सोपालम्भम्।) अयि जड़प्रकृते ॥१५६

परिच्युतस्तत्कुचकुम्भमध्यात्
किं शोषमायासि मृणालहार।
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः कथं स्यात् ॥१५७

---

गलच्छल गलच्छेति विकल्पान्नहस्वः। मालिनीच्छन्द इदम्। तदुक्तम्। ननमयययुतेयं मालिनीभोगिलोकैरिति ॥१५४॥

विदू इति। भो इत्यादि। भो वयस्य अयं खलु अपरस्तस्या एव पीनस्तनस्खलनक्लिश्यत् कोमलमृणालहारः तत् प्रेक्षतां भवान्। पीनाभ्यां स्तनाभ्यां स्खलनेन क्लिश्यन् शुष्यं श्चासौ कोमलमृणालहारश्चेति सः। तत् तस्मात् ॥१५५॥

राजेति। उरसि वक्षसि। सोपालम्भं दुर्वचनसहितम्। जडा अचेतना प्रकृतिः स्वभावो यस्य सः। हे तथाभूत। जड़ास्त्रियाम्। मूकशिम्बरां हिमग्रस्तमूकाप्रज्ञेषु तु लिङ्गवत् मेदिनी। संसिद्धि प्रकृती त्विमे। स्वरूपञ्च स्वभावश्चेत्यमरः ॥१५६॥

परीति। हे मृणालहार तस्याः कुचकुम्भयोः स्तनकलशयोर्मध्यात् परिच्युतः सन् किं कथं शोषं शुष्कताम् आयासि प्राप्नोषि तारकस्य तव सम्बन्धिनः। युष्मदस्मत्त्वन्मदाविति त्वदित्यस्य स्थाने तवकादेशः। सूक्ष्मतन्तोरपि सूक्ष्मसूत्रस्यापि तत्र अवकाशो नास्ति कथं भवतः स्यादवकाश इति शेषः। उपजातिच्छन्दः। तदुक्तम्। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति ॥१५७॥

सुसं। (आत्मगतम्।) हद्धी हद्धी गुरुआणुराओक्खित्तहिअओ भट्टा असम्बद्धं वि मन्तिदं पउत्तो ता अदो अवरं उण ण जुत्तं अपेक्खिदुं भोदु एवं दाव॥१५८

(प्रकाशम्।) सहि जस्स किदे तुमं आअदा सो अअं दे पुरदो चिट्ठदि॥१५९

साग। (सासूयम्।) कस्स किदे अहं आअदा को वा एत्त चिट्ठदि॥१६०

सुसं। (विहस्य।) अइ असमसङ्किदे णं चित्तफलअस्स किदे ता गेह्न एदं॥१६१

साग। (सरोषम्।) अहं अणिउणा क्खु तुह ईदि-

---

सुसमिति। आत्मगतमनतिस्पष्टमित्यर्थः। हद्धीत्यादि। हाधिक् हाधिक् गुर्व्वनुरागोत्क्षिप्तहृदयो भर्त्ता असम्बद्धमपि मन्त्रयितुं प्रवृत्तस्तदतःपरं पुनर्न्नयुक्तमपेक्षितुं भवतु एवं तावत्। असम्बद्धमयुक्तम्। अचेतनेपि चेतनवदालापादितिभावः। अपेक्षितुं सागरिकावृत्तान्तनिवेदने इति शेषः। एवं तावत् कर्त्तव्यमितिशेषः॥१५८॥

प्रकाशमिति। सुस्पष्टमित्यर्थः। सहीत्यादि। सखि यस्य कृते त्वमागता सोयं ते पुरतस्तिष्ठति। कृते अर्थे। अर्थे कृतेऽव्ययं तावत् तादर्थ्ये वर्त्तते इयमिति कोषसारः॥१५९॥

सागेति। सासूयं दोषारोपणसहितम्। कस्स इत्यादि। कस्य कृते अहमागता कोवात्र तिष्ठति॥१६०॥

सुसमिति। अइ इत्यादि। अयि अन्यशङ्किते ननु चित्रफलकस्य कृते तत्गृहाणेदम्॥१६१॥

सागेति। अहमित्यादि। अहमनिपुणा ख तवेदृशानामा-

सात्तणं आलावाणं ता अस्सदो गमिस्सं। (इति गन्तु मिच्छति।)[१६२]

सुसं। अइ असहणे इह दाव मुहुत्तअं चिट्ठ जाव इमादो कअलीघरादो चित्तफलअं गेह्लिअ आअच्छामि॥[१६३]

साग। सहि एव्वं करेहि॥[१६४]

सुसं। (कदलीगृहाभिमुखं परिक्रामति॥[१६५]

विदू। (सुसङ्गतां दृष्ट्वाससम्भ्रमम्।) भो वअस्स पच्छादेहि एदं चित्तफलअं एसा क्खु देवीए परिचारिआ सुसङ्गदा आअदा॥[१६६]

राजा। (पटान्तेन फलकमाच्छादयति।)[१६७]

सुसं। (उपसृत्य।) जअदु जअदु भट्टा॥[१६८]

---

लापानां तदन्यतो गमिष्यामि। अनिपुणा अनभिज्ञा। निपुणाभिज्ञविज्ञनिष्णात शिक्षिता इत्यमरः॥१६२॥

सुसमिति। अइ इत्यादि। अयि असहने इहतावन्मुहूर्त्तं तिष्ठ यावदस्मात् कदलीगृहात् चित्रफलकं गृहीत्वा आगच्छामि। असहने सत्वरे॥१६३॥

सागेति। सहि एव्वं करेहि सखि एवं कुरु। एवं यदुक्तं तदित्यर्थः॥१६४॥

सुसमिति। सुगमम्॥१६५॥

विदू इति। ससम्भ्रमं सत्वरम्। सम्भ्रमस्त्वरेत्यमरः। भो इत्यादि। भो वयस्य प्रच्छादयेदं चित्रफलकं एषा खलु देव्याः परिचारिका सुसङ्गता आगता॥१६६॥

राजेति। पटान्तेन वस्त्रान्तेन। पटाश्चित्रपटे वस्त्रे इति मेदिनी॥१६७॥

सुसमिति। जअदु जअदु भट्टा जयति जयति भर्त्ता॥१६८॥

राजा। सुसङ्गते स्वागतमिहोपविश्यताम्।[१६९]

सुसं। (उपविशति।)[१७०]

राजा। सुसङ्गते कथमिहस्थोऽहं भवत्या ज्ञातः॥[१७१]

सुसं। (विहस्य।) ण केवलं देवो चित्तफलएण सह सव्वोवि वुत्तन्तो मए विण्णादो ता देवीए गदुअ णिवेदइस्सं। (इति गन्तुमिच्छति।)[१७२]

विदू। (अपवार्य्य सभयम्।) भो वअस्स सव्वं सम्भावीअदि मुहरा क्खु एसा गब्भदासी ता परितोसेहि णं॥[१७३]

राजा। युक्तमुक्तं भवता॥[१७४]

(सुसङ्गतां हस्ते गृहीत्वा।) सुसङ्गते क्रीड़ामात्र-

राजेति। स्वागतं कुशलप्रश्न इति हारावली॥१६९॥

सुसमिति। सुगमम्॥१७०॥

राजेति। सुगमम्॥१७१॥

सुसमिति। णेत्यादि। न केवलं देवश्चित्रफलकेन सह सर्व्वोपि वृत्तान्तो मया विज्ञातस्तद्देवीं गत्वा निवेदयिष्यामि। देवो विज्ञात इति सम्बन्धः॥१७२॥

विदू इति। अपवार्य्य व्यवधाय स्वयं परावृत्त्येति यावत्। उक्तं दशरूपके। रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितमिति। भो इत्यादि। भो वयस्य सर्व्वं सम्भाव्यते मुखराखल्वेषा गर्भदासी तत् परितोषयैनाम्। मुखरा अबद्धमुखा। दुर्म्मुखे मुखराबद्धमुखावित्यमरः। गर्भदासी दास्याः पुत्री। गर्भावस्थायामेव तस्या दासीभावोत्पत्तेः॥१७३॥

राजेति। युक्तमुचितम्॥१७४॥

सुसङ्गतामिति। क्रीड़ामात्रं परिहासमात्रम्। द्रवकेलिपरी-

मेतत् अकारणे त्वया देवी न व्यथयितव्या इदं ते पारि-तोषिकम्। ( इत्युक्त्वाऽऽभरणं दातुमिच्छति। )[१७५]

सुसं। भट्टा अलं एदिणा कण्णाभरणेण णं मए भट्टिणीए पसादेण बहुतरं ज्जेव कीलिदं एसो एव्व से गुरुओ पसाओ जं कीस तुए एत्थ चित्तफलए अहं आलिहिदेत्ति कुविदा मे पिअसही साअरिआ चिट्ठदि ता गदुअ हत्थे गेह्लिअ पसादीअदु णं॥[१७६]

राजा। (ससम्भ्रममुत्थाय।) क्वासौ दर्शय दर्शय॥[१७७]

सुसं। एसा कअलीगुम्मन्तरिदा चिट्ठदि॥[१७८]

राजा। ( सहर्षम्। ) आदेशय मार्गम्॥[१७९]

सुसं। इदो इदो भट्टा॥[१८०]

---

छाया: क्रीड़ा लीलाच नर्म्मचेत्यमरः। व्यथयितव्या दुःखं प्रापयितव्या॥१७५॥

सुसमिति। भट्टेत्यादि। भर्त्तरलमेतेन कर्णाभरणेन ननु मया भर्त्र्याः प्रसादेन बहुतरमेव क्रीड़ितम् एष एव मे गुरुः प्रसादो यत् कस्मात्त्वया अत्र चित्रफलके अहमालिखितेति कुपिता मे प्रियसखी सागरिका तिष्ठति तद्गत्वा हस्ते गृहीत्वा प्रसाद्यतामेनाम्। क्रीड़ितमलङ्कारादिभिरिति शेषः। प्रसादय तु प्रसन्नीकरोतु। एनां सागरिकाम्॥१७६॥

राजेति। क कुत्र। असौ सागरिका॥१७७॥

सुसमिति। एसेत्यादि। एषा कदलीगृहगुल्मान्तरिता तिष्ठति। गुल्मः स्तम्बः॥१७८॥

राजेति। सुगमम्॥१७९॥

सुसमिति। इदो इदो भट्टा इतइतो भर्त्ता॥१८०॥

(सर्व्वे कदलीगृहान्निष्क्रान्ताः।)[१८१]

साग। (राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पञ्च स्वगतम्।) एअं पेक्खिअ अदिसद्दसेण ण सक्कणोमि पदादो पदं बि गन्तुं ता किं बा एत्थ करिस्सं॥[१८२]

विदू। भो गेह्लामि एदं चित्तफलअं कदावि इमिणा पुणो बि कज्जं होदि॥[१८३]

(सागरिकां दृष्ट्वा।) हीही भो अच्चरीअं अच्चरीअं इदिसं कण्णआरअणं माणुसलोए ण दीसदि ता तक्केमि पआबइणोवि एदं णिम्माइअ बिह्मओ समुप्पणो॥[१८४]

राजा। वयस्य ममाप्येवंमनसि बर्त्तते।[१८५]

दृशः पृथुतरीकृता जितनिजातपत्त्रत्विषः
शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसः।

---

सर्व्वे इति। सुगमम्॥१८१॥

सागेति। एअमित्यादि। एनं प्रेक्ष्य अति साध्वसेन न शक्नोमि पदात् पदमपि गन्तुं तत् किंवा अत्र करिष्यामि। अतिसाध्वसेन अतिभयेन॥१८२॥

विदू इति। भो इत्यादि। भो गृह्लामि इदं चित्रफलकं कदापि अनेन पुनरपि कार्य्यं भवति। कार्य्यं फलम्। भवतीति कदाकर्हिभ्यां वेति की॥१८३॥

सागरिकामिति। हीहीत्यादि। हीही भो आश्चर्य्यमाश्चर्य्यम् ईदृशं कन्यारत्नं मानुषलोके न दृश्यते तत् तर्कयामि प्रजापतेरपि इदं निर्म्माय विस्मयः समुत्पन्नः। प्रजापते र्ब्रह्मणः। इदं कन्यारत्नम्। निर्म्माय सृष्ट्वा॥१८४॥

राजेति। एवमुत्तरश्लोकप्रतिपाद्यम्॥१८५॥

चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसा
विधाय ललनां जगज्जनललामभूतामिमाम् ॥१८६

साग। ( साद्भयं सुसङ्गतामवलोक्य। ) सहि ईदिसो चित्तफलओ तुए आणीदो। ( इति गन्तुमिच्छति। ) १८७

राजा। दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम्।

---

दृश इति। जगज्जनानां ललामभूतां भूषणभूताम्। प्रधानध्वज-शृङ्गेषु पुण्ड्रवालधि लक्ष्मसु। भूषावाजिप्रभावेषु ललामं स्याल्ललाम चेति रुद्रः। इमां ललनां रमणीं विधाय निर्माय वेधसा विधात्रा जिता अनुकृता निजातपत्रस्य स्वीयच्छत्रस्य त्विषः प्रभायाभिस्ताः। निजाब्जपत्रत्विष इति पाठे तु निजाब्जं निजासनपद्मं तस्य पत्राणि दलानि तेषां त्विषः जिताभ्यायाभिरित्यर्थः। इयश्चतुर्ध्रुवं निश्चितं पृथुकरीकृता अतिविशालीकृताः अतिदिव्यतयेतिभावः। पृथुवृहत् विशा-लमित्यमरः। तथा चतुर्भिरपिमुखैः समं युगपत् साधु साधु इति ध्रुवं व्याहृतमुक्तम्। तथा विस्मयवशात् शिरांसि ध्रुवं चलितानि कम्पितानि चलितानीति गौमिकत्वात् ह्रस्वः। चलजगतौ मित्त्वे इति कविकल्पद्रुमः। अत्र वेधसस्तत्तत्क्रियासम्बन्धाभावेपि तत्सम्बन्धाध्यवसायादतिशयोक्ति-रलङ्कारः। यदुक्तं दर्पणे। सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययाविति। तद्विपर्ययौ अभेदे भेदः असम्बन्धे सम्बन्धः। पृथ्वीच्छन्द एतत्। तदुक्तम्। जसौ जसयला वसुग्रहयतिश्च पृथ्वीगुरुरिति ॥१८६॥

सागेति। सहीत्यादि। सखि ईदृशश्चित्रफलकस्त्वया आनीतः ॥१८७॥

राजेति। दृष्टिमिति। हे भामिनि कोपने। कोपना सैव भामि-नीत्यमरः। यद्यपि इमां दृष्टिं रुषा क्रोधेन क्षिपसि पातयसि तथापि

त्यक्त्वा त्वरां व्रज पदैः स्खलितैरयन्त्रे
खेदं गमिष्यति गुरुर्नितरां नितम्बः ॥ १८८

सुसं। भट्टा अदिकोपणा क्खु एसा ता अग्गहत्थे णं गेह्णिअ पसादेहि णं ॥ १८९

राजा। सानन्दम् ॥ यथाह भवती। ( सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति )। १९०

विदू। भो एसा क्खु तुए अपुव्वा सिरी समासादिदा। १९१

राजा। वयस्य सत्यम्। १९२

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः॥ १९३

---

इयं दृष्टिः रुचभावं रुचतां न एष्यति प्राप्स्यति यतः स्निग्धा स्नेहवती। त्वरां त्यक्त्वा व्रज गच्छ यतः स्खलितैः स्वस्थानाद्विचलितैः पदैः पदन्यासैस्ते तव अयं गुरुर्दीर्घ्घन् नितम्बः कव्याः पश्चाद्भागो नितरामतिशयेन खेदं क्लेशं गमिष्यति ॥१८८॥

सुसमिति। भट्टेत्यादि। भर्त्तरतिकोपनाखल्वेषा तदग्रहस्तेन गृहीत्वा प्रसादयैनाम्। अतिकोपना अतिक्रोधशीला। अग्रहस्तेन पाणिना ॥१८९॥

राजेति। सुगमम् ॥१९०॥

विदू इति। भो इत्यादि। भो एषा खलु त्वया अपूर्वाश्रीः समासादिता। श्रीर्लक्ष्मीः। समासादिता प्राप्ता ॥१९१॥

राजेति। सत्यं श्रीरेवैषा इत्यर्थः ॥१९२॥

श्रीरिति। एषा सागरिका श्रीर्लक्ष्मीः अस्याः पाणिरपि पारिजातस्य देवतरुविशेषस्य पल्लवः अन्यथा कुतः कस्मात् स्वेदस्य घर्म्मस्य च्छद्मव्याजो यस्य स तथोक्तो अमृतद्रवो अमृतरसः स्रवति चरति। कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः। द्रवः प्रद्रावरससो-

सुसं। सहि अदक्खिणासि तुमं दाणिं जा एव्वं भट्टिणा हत्थेण गहिदाबि कोवं ण मुञ्चेसि॥ १९४

साग। (सभ्रूभङ्गम्) सुसङ्गदे अज्ज वि ण विरमेसि। १९५

राजा। अयि न खलु सखीजने युक्तएवं कोपानुबन्धः कर्तुम्॥ १९६

---

र्गतौ नर्म्मणि विद्रवे इति विश्वः। अत्र पारिजातस्यान्तमन्थनदशायामुत्थानादन्तःचरणानुभववशेन पाणेः पारिजातपल्लवत्वानुमानम्। तथाच मथ्यमानेऽन्ते जातं जातरूपमयत्वचम्। पारिजातं जगन्नाथः केशवः केशिसूदन इति ददर्शेत्यनुवृत्तौ विष्णुपुराणम्। सति च तदनुमाने सागरिकाया लक्ष्मीत्वेन यद्वः सम्भवति लक्ष्म्याः पारिजातपल्लवाभिलाषित्वात्। तदुक्तं ध्याने। हस्ताब्जैर्वरदानमम्बुजयुगाभीतीर्दधानां हरेः कान्तां काञ्चितपारिजातलतिकां वन्दे सरोजासनामिति। अत्र प्रकृतस्यान्यत्व स्थापनादपह्नुतिरलङ्कारः। उक्तं दर्पणे। प्रकृतं यन्निषिध्यान्यस्थापनं स्यादपह्नुरिति। स्वेदस्य तत्त्वं निषिध्य अन्ततद्रवत्वं स्थापयति॥ १९३॥

सुसमिति। सहीत्यादि। सखि अदक्षिणासि त्वमिदानीं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि। अदक्षिणा असरला। दक्षिणे सरलोदाराविल्यमरः॥ १९४॥

सागेति। सभ्रूभङ्गं भ्रूकौटिल्येन सहितम्। सुसमित्यादि। सुसङ्गते अद्यापि न विरमसि। अद्यापि अधुनापि। विरमसि परिहासान्निवर्त्तसे॥ १९५॥

राजेति। अयिः सम्बोधने। अयि प्रश्नानुनययोस्तथा सम्बोधनेपि चेति मेदिनी। कोपानुबन्धः कोपस्यानिवर्त्तनम्। अत्र प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशत इति न्यायात् युक्त इत्यनेनोक्ततया प्रथमा नतु कर्त्तुमित्यस्यानुक्तकर्म्मत्वेन द्वितीया। दोषोत्पादे-८

विदू। भोदि वुभुक्खिदो बह्मणो विअ किं कुप्पसि॥१९७

सुसं। सहि तुए सह ण बोलइस्सं। १९८

राजा। अयि कोपने नैतद्युक्तं समानप्रतिपत्तिषु सखीषु। १९९

विदू। भो एसा क्खु अवरा देवी वासवदत्ता॥ २००

राजा। ( सचकितं सागरिकाया हस्तं मुञ्चति। २०१

साग। (ससंभ्रमम्।) सुसङ्गदे किं दाणिं एत्थ करिस्सं। २०२

सुसं। सहि एदाए कदलीबीथिआए णिक्कमह्म। २०३

( इति निष्क्रान्ते। )

---

सुवन्धः स्यात् प्रकृत्यादिषु नश्वरे। मुख्यानुयायिनि शिशौ प्रकृतस्यानिवर्त्तने इत्यमरः॥ १९६॥

विदू इति। भोदीत्यादि। भवति वुभुक्षितो। ब्राह्मण इव किं कुप्यसि। वुभुक्षितः क्षुधितः। किं कथम्॥ १९७॥

सुसमिति। सहीत्यादि। सखि त्वया सह न वक्ष्यामि। वक्ष्यामि आलपिष्यामि॥ १९८॥

राजेति। एतत् त्वया सह नालपिष्याभीतिवचनम्। समाना आत्मनिर्विशेषा प्रतिपत्तिर्बुद्धिर्यासुतासु। प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रयुज्यत इति विश्वः॥१९९

विदू इति। भो इत्यादि। भो एषा खलु अपरा देवी वासवदत्ता॥ २००॥

राजेति। सचकितं सशङ्कम्॥ २०१॥

सागेति। सुसमित्यादि। सुसङ्गते किमिदानीमत्र करिष्यामि। अत्र स्थाने॥ २०२॥

सुसमिति। सहीत्यादि। सखि एतया कदलीवीथ्या निष्क्रामावः। कदलीवीथ्या कदलीश्रेण्या। वीथ्यालिरावलिः पंक्तिः श्रेणी-

राजा। पार्श्वतोऽवलोक्य सविस्मयम्॥ कासौ देवी वासवदत्ता॥ २०४

विदू। भो ण जानामि क्व सा मए एसा क्खु अवरा देवी वासवदत्ता अदिदीहरोसदाए त्ति भणिदं॥ २०५

राजा। धिङ्मूर्ख॥ २०६

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा।
रत्नावलीव कान्ता मम हस्तात् भ्रंशिता भवता॥ २०७

(ततः प्रविशति वासवदत्ता काञ्चनमाला च॥ २०८

---

वेखास्तु राजय इत्यमरः। तामन्तरालीकृत्येत्यर्थः। निष्क्रामावः बहिर्गच्छावः॥ २०३॥

राजेति। सविस्मयं देवीसद्दृक्षेतिशेषः॥ २०४॥

विदू इति। भो इत्यादि। भो न जानामि कासा मया एषा खलु अपरा देवी वासवदत्ता अतिदीर्घरोषणतया इति भणितम्। मया भणितमिति सम्बन्धः। कुत एवं भणितमित्यत आह अतीत्यादि। अतिदीर्घमनल्पकालस्थायिरोषणं क्रोधो यस्याः सा। तत्तया॥ २०५॥

राजेति। धिक् निर्भर्त्सने॥ २०६॥

प्राप्तेति। दैवात् भाग्यवशात् कथमपि केनापि सुयोगेन प्राप्ता प्रकटोव्यक्तोरागो अनुरागः पक्षे रक्तिमा यस्याः सा। रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिष्विति शाश्वतः। रत्नावली रत्नमालेव सा कान्ता कण्ठमनीता अप्रापितैवकण्ठाप्रापण दशायामेव इति तात्पर्य्यम्। भवता ममहस्तात् भ्रंशिता। अत्र पूर्णोपमालङ्कारः। तल्लक्षणमुक्तम्॥ २०७॥

तत इति। सुगमम्॥ २०८॥

वास। हञ्जे कञ्चणमाले अध केत्तिअदूरे दाणिं अज्जउत्तेण परिगाहिदा णोमालिआ॥ २०९

काञ्च। एदं कअलीघरं अदिक्कमिअ दीसदि॥ २१०

वास। ता आदिसेहि मग्गं॥ २११

काञ्च। एदु एदु भट्टिणी॥ (इति परिक्रामतः)॥ २१२

राजा। वयस्य केदानीं प्रियतमा द्रष्टव्या। २१३

काञ्च। भट्टिणि जह समीवे भट्टा मन्तेदि तह तक्केमि भट्टिणीं एव्व पड़िपालअन्तो चिट्ठदि ता उपसप्पदु भट्टिणी। २१४

वास। (उपसृत्य) जअदु जअदु अज्जउत्तो॥ २१५

राजा। अपवार्य्य। वयस्य प्रच्छादय चित्रफलकम्॥ २१६

---

वासेति। हञ्जे इत्यादि। हञ्जे काञ्चनमाले अथ कियद्दूरे इदानीमार्य्यपुत्रेण परिगृहीता नवमालिका। अथ प्रश्ने॥ २०९॥

काञ्चेति। एदमित्यादि। इदं कदलीगृहमतिक्रम्य दृश्यते। कदलीगृहात् परमेव सा दर्शनीयेत्यर्थः॥ २१०॥

वासेति। तेत्यादि। तदादेशय मार्गम्॥ २११॥

काञ्चेति। एदु एदु भट्टिणी एतु एतु भर्त्री॥ २१२॥

राजेति। प्रियतमा सागरिका॥ २१३॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि यथा समीपे भर्त्ता मन्त्रयति तथा तर्कयामि भर्त्रीमेव प्रतिपालयन् तिष्ठति तदुपसर्पतु भर्त्री। यथा तेन प्रकारेण प्रियतमा क द्रष्टव्येति पदप्रयोगेणेत्यर्थः। प्रतिपालयन् प्रतीक्षमाणः॥ २१४॥

वासेति। उपसृत्य राजानमुपगम्य। जअदित्यादि। जयति जयति आर्य्यपुत्रः॥ २१५॥

राजेति। अपवार्य्य परावृत्य॥ २१६॥

विदू । ( गृहीत्वा कक्षे निक्षिपति ) । [२१७]

दास । अज्जउत्त कुसुमिदा णोमालिआ । [२१८]

राजा । ( सविस्मयम् । ) देवि प्रथममागतैरस्माभिस्त्वं चिरयसीति कृत्वा न दृष्टा तदेहि समेतावेव तां पश्यावः । [२१९]

दास । (निर्वर्ण्य ) अज्जउत्त सुहाणुराआदो एव्व जाणिदं जहा कुसुमिदा णोमालिआ त्ति. ता ण गमिस्सं ॥ [२२०]

विदू । भोदि जइ एव्वं ता जिदं अह्मेहिं ॥ ( इति बाहू प्रसार्य्य नृत्यति । कक्षात्पतितं फलकं दृष्ट्वा विषादं नाटयति ) [२२१]

राजा । ( अपवार्य्य अङ्गुल्या दर्शयन् वसन्तकमुखं पश्यति ॥) [२२२]

---

विदू इति । गृहीत्वा चित्रफलकमिति शेषः ॥ २१७॥

दासेति । अज्जेत्यादि । आर्य्यपुत्र कुसुमिता नवमालिका । कुसुममस्या जातं कुसुमिता । इतोऽस्य जाते इति इतः ॥ २१८॥

राजेति । प्रथमं भवदागतेः पूर्व्वम् । चिरयसि विलम्बं करोषि । न दृष्टा नवमालिकेति शेषः । समेतौ मिलितौ । आवामिति शेषः ॥ २१९॥

दासेति । निर्वर्ण्य निरीक्ष्य । अज्जेत्यादि । आर्य्यपुत्र सुखानुरागादेव ज्ञातं यथा कुसुमिता नवमालिकेति तन्नगमिष्यामि ॥ २२०॥

विदू इति । भोदीत्यादि । भवति यद्येवं तज्जितमस्माभिः । एवं कुसुमितेत्यवधारणम् । अस्माभिर्जितमस्माकं जयोऽभूदित्यर्थः । भावक्तान्तेन योगे विकल्पान्न कर्त्तरि षष्ठी । प्रसार्य्य विस्तार्य्य । फलकं चित्रफलकम् । विषादं हर्षक्षयम् ॥ २२१ ॥

राजेति । दर्शयन् पतितं चित्रफलकमितिशेषः ॥ २२२॥

विदू। (अपवार्य्य)। भो भो मा कुप्प एत्थ जाणिस्सं उत्तरं दादुं॥ २२३

काञ्च। (फलकं गृहीत्वा॥) भट्टिणि पेक्ख दाव किं एत्थ चित्तफलए आलिहिदं॥ २२४

वास। (निर्वर्ण्य स्वगतम्॥) अअं अज्जउत्तो इअं उण साअरिआ॥ २२५

(प्रकाशं राजानं प्रति॥ सकोपहासम्॥) अज्जउत्त केण उण एदं आलिहिदं॥ २२६

राजा। (सवैलक्ष्यस्मितम् अपवार्य्य।) वयस्य किं ब्रवीमि॥ २२७

विदू। (अपवार्य्य) भो मा चिन्तेहि अहं उत्तरं दाइस्सं॥ २२८

---

विदू इति। भो इत्यादि। भो भो माकुप्य अत्र ज्ञास्यामि उत्तरं दातुम्॥ २२३॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि प्रेक्षस्व तावत् किमत्र चित्रफलके आलिखितम्॥ २२४॥

वासेति। निर्व्वर्ण्य दृष्ट्वा। अअमित्यादि। अयमार्य्यपुत्रः इयं पुनः सागरिका॥२२५॥

प्रकाशमिति। सकोपहासं कोपहासाभ्यां सहितम्। अज्जेत्यादि आर्य्यपुत्र केन पुनरिदमालिखितम्॥२२६॥

राजेति। विलक्षो विस्मयान्वित इत्यमरः। तस्य भावो वैलक्ष्यम्। विस्मय इत्यर्थः। तेन स्मितेन ईषत् हसितेन च सहितं स वैलक्ष्यस्मितम्॥२२७॥

विदू इति। भो इत्यादि। भो माचिन्तय अहमुत्तरं दास्यामि। चिन्तय उद्विग्नो भव॥२२८॥

(प्रकाशम् । वासवदत्तां प्र ति ।) भोदि मा अखधा सम्भा- वेहि अप्पा किल दुक्खेण आलिहीअदि त्ति मम वअणं सुणिअ पिअवअस्सेण एदं आलेक्खविन्नाणं दंसिदं ॥२२९

राजा । यथाह वसन्तकस्तथैवैतत् ॥२३०

वास । (फलकं निर्वर्ण्य ।) अज्जउत्त एसावि जा अवरा तुह समीवे आलिहिदा ता किं अज्जवसन्तअस्स विन्नाणं ॥२३१

राजा । सवैलक्ष्यस्मितम् । देवि अलमन्यथाशङ्कया इयं हि कापि कन्यका स्वचेतसैव परिकल्प्य लिखिता न तु दृष्टपूर्वा ॥ २३२

विदू । सच्चं सवामि बह्मसूत्तेण जइ कदापि अह्मेहिं ईदिसो दिट्ठपुव्वा ॥२ ३

---

प्रकाशमिति । भो दीत्यादि । भवति मा अन्यथा सम्भावय आत्मा किल दुःखेनालिख्यत इति मम वचनं श्रुत्वा प्रियवयस्येन इदमालेख्य विज्ञानं दर्शितम् । सम्भावय मन्यस्व । किल सम्भावनायाम् । आलेख्य- विज्ञानं चित्रनैपुण्यम् ॥२२९ ॥

राजेति । सुगमम् ॥२३०॥

वासेति । अज्जेत्यादि । एषापि या अपरा तव समीपे आलि- खिता तत् किं वसन्तकस्य विज्ञानम् । विज्ञानं नैपुण्यम् ॥ २३१॥

राजेति । हि यस्मात् । स्वचेतसा निजमनसा । परिकल्प्य अव- धार्य । दृष्ट' दर्शनभूतं पूर्वस्मिन् यस्याः सा दृष्टपूर्वा । दृष्टमिति भावोक्तः ॥२३२॥

विदू इति । सत्यमित्यादि । सत्यं शपेदापि ब्रह्मसूत्रेण यदि कदापि अस्माभिरीदृशी दृष्टपूर्वा । यदि ईदृशी कन्या कदापि दृष्टपूर्वा पूर्वं

काञ्च। (अपवार्य्य।) भट्टिणि कदावि ईदिसं भण घुण-क्खरं संवदृदि जेव्व ता अलं कोविदेण।२३४

वास। (अपवार्य्य।) अइ उजुए एदस्स वक्कभणिदाइं ण आणासि वसन्तओ क्खु एसो॥२३५

(प्रकाशं राजानं प्रति।) अज्जउत्त मम भण एदं चित्तं पेक्खन्तीए सीसवेअणा समुप्पणा ता सुहं चिट्ठदु अज्ज-उत्तो अहं गमिस्सं॥ (इत्युत्थाय गन्तुमिच्छति।)२३६

राजा। पटान्ते गृहीत्वा।) देवि २३७

दृष्टा तदा ब्रह्मसूत्रेण यज्ञोपवीतेन शपे दिव्यं करोमि। पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनीति त्रिकाण्डशेषः। वस्तुतस्तद्दिनात् पूर्व्वं सागरिकाया अदृष्टत्वान्न मिथ्याशपथकारिता दोषः॥ २३३॥

काञ्चेति। भट्टिणीत्यादि। भर्त्ति कदापि ईदृशं पुनर्घुणाचरं संवदत्येव तदलं कुपितेन। ईदृशमेतद्यत्कदापि कदाचित् घुणाचरं घुणश्च तेन जातमचरं संवदत्येव लिखितवर्णविशेष मनुकरोत्येव अविकलवर्णविशेष एव भवतीत्यर्थः। तथाच परिकल्पप्रलिखितमिदं सागरिकारूपं समुत्पन्नमिति वसन्तकोक्तं भवितुमर्हतीति भावः॥१२४॥

वासेति। अइ इत्यादि। अयि ऋजुके एतस्य वक्रभणितानि न जानासि वसन्तकः खल्वेषः। वक्रभणितानि एतद्दिनात् पूर्व्वं कदापि नेयं दृष्टेत्यभिप्रायान्तरगर्भपदानि। न जानासि न बुध्यसे। वसन्तक इति। एवमायनिपुणोक्तिषु प्रसिद्धोऽयमिति भावः॥ २३५॥

प्रकाशमिति। अज्जेत्यादि। आर्य्यपुत्त्र मम पुनरिदं चित्रं प्रेच-माणायाः शीर्षवेदना समुत्पन्ना तत् सुखं तिष्ठतु आर्य्यपुत्त्रः अहं गमि-ष्यामि। प्रेक्ष्यमाणायाः पश्यन्त्याः। शीर्षवेदना शिरःपीड़ा॥२३६॥

राजेति। सुगमम्।

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।
न मे दोषोऽस्तीति त्वमिदमपि न ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ १२८

वास। (सविनयं पटान्तमाकर्षन्ती।) अज्जउत्त मा अण्णधा संभावेहि सच्चं एव्व मं सीसवेअणा बाधेदि ता गमिस्सं। (इति निष्क्रान्ते।) १२९

विदू। भो दिट्ठिआ वड्ढसि क्खेमेण अदिक्कन्ता एसा वासवदत्ता अआलवादलिआ। १४०

---

प्रसीदेति। हे देवि त्वं प्रसीद प्रसन्ना भव इति ब्रूयां वदेयम् इदं वचनं कोपे भवत्याः क्रोधे असति अविद्यमाने न घटते न भवति। तथा च अनाविष्कृतः कोपो न युक्त एवानुभवितुमिति भावः। पुनरेवं नो करिष्यामि इति एवमुक्तौ अभ्युपगमो निजदोषाङ्गीकारो भवेत्। अभावे नह्यनोनापीति। अङ्गीकाराभ्युपगम प्रतिश्रवसमाधय इति चामरः। न मे दोषोऽस्ति इत्युक्तावपि इदं सागरिकायामनुरागसञ्चारादिकं त्वं मृषामिथ्या न ज्ञास्यसि। तथाच सागरिकायामनुरागो जात एव परं नासौ स्वयमुद्भावितानुरागः तया अन्येन वा केनचिदसावनुरागं लम्भित इत्येवानुभवितुं मर्हसीतिभावः। हे प्रियतमे एतस्मिन् विषये किं वक्तुं क्षमं युक्तम् इति नवेद्मि जानामि। युक्ते क्षमं शक्ते हितेत्रिष्वित्यमरः ॥ १२८ ॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र मा अन्यथा सम्भावय सत्यमेव मां शीर्षवेदना बाधते तद्गमिष्यामि। बाधते पीड़यति ॥ १२९ ॥

विदू इति। भो इत्यादि। भो दिष्ट्यावर्द्धसे क्षेमेण अतिक्रान्ता एषा वासवदत्ता अकालवादलिका। दिष्ट्या आनन्दे। वर्द्धसे अभ्युदेषि।

राजा। धिङ्मूर्ख अलं परितोषेण यान्त्या निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः। पश्य ॥२४१

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मांप्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम्।
अन्तर्बाष्पजड़ीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥२४२

विदू। गदा देवी बासवदत्ता ता कीस तुमं घरक्ख-
दद्विदं करेसि ॥२४३

राजा। मूढ़ न लक्षितस्त्वया देव्याः कोपस्तत्त्वया

---

क्षेमेण मङ्गलेन। अकालवादलिका आकालिकवर्षानुबन्धः सा यथा अचिरेण न त्यजति तद्वदिय मित्यर्थः ॥२४०॥

राजेति। परितोषेण देवीगमनात् सन्तोषेण। यान्त्यागच्छन्त्या। निगूढो अतिगुप्तः। न लक्षितो नानुभूतः। कोपानुबन्धः। क्रोधानिवृत्तिः ॥२४१॥

भ्रूभङ्ग इति। भ्रुवोर्भङ्गे भेदे उद्गते उत्थितेऽपि सहसा तत्क्षणे वदनं परां सातिशयां नम्रतां नतभावं नीतम्। तथा साम्प्रति मां लक्ष्यीकृत्य ईषद् हसितं भेदकारि प्रणयविध्वंसि निष्ठुरं वचोनोक्तम्। तथा अन्तर्बाष्पेण अन्तर्गताश्रुवारिणा जडीकृतं मन्दीकृतं चक्षुः प्रभुतया शक्त्या न विस्फारितम् उन्मीलितम्। तस्मात् दयितया प्रियया कोपः क्रोधश्च प्रकटीकृतः प्रकाशितः प्रश्रयः प्रणयश्च न मुक्तस्त्यक्तः। दयितं वल्लभं प्रियमिति प्रश्रयप्रणयौ समाविति चामरः। अत्र प्रथमपादत्रयोक्तवाक्यार्थानां चतुर्थचरणोक्तमप्रतिहेतुत्वात् काव्यलिङ्गमलङ्कारः। यदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यत इति ॥ २४२ ॥

देवीप्रसादनं मुक्त्वा नान्यमत्रोपायमाकलयामि। तदेहि देवीं प्रसादयितुमभ्यन्तरमेव प्रविशावः॥ (इति निष्क्रान्तौ।) २४४

न्त्य

इति द्वितीयोऽङ्कः।

विदू इति। गदेत्यादि। गत्वा देवी वासवदत्ता तत्कस्मात्त्वं मरण्यरुदितं करोषि। अरण्यरोदनं यथा विफलं तद्वदित्यर्थः॥२४३॥

राजेति। मूढ़ अत्र। अत्रे मूढ़ यथा जातमूर्ख वैधेय वालिशा इत्यमरः। देवी प्रसादनं मुक्त्वा तदन्तरेणेत्यर्थः। आकलयामि निश्चिनोमि। अभ्यन्तरमन्तःपुरम्॥२४४॥

द्वितीयोऽङ्को द्वितीयः परिच्छेदः॥२४५॥

इति श्रीशिवनाथशर्म्मकृतायां रत्नावलीटीकायां विद्योतनी समाख्यायां द्वितीयाङ्कविवरणम्॥२॥

## ॥ अथ तृतीयाङ्कः ॥



॥ ततः प्रविशति मदनिका ।[1]

मद । (आकाशे ।) कोसम्बिए अवि दिट्ठा तुए भट्टिणीसआसे कञ्चणमाला ण वेत्ति ।[2]

(कर्णं दत्त्वा आकर्ण्य ।) किं भणासि को बि कालो ताए आअच्छिअ गदाए त्ति ता कहिं दाणिं पेक्खिस्सं ।[3]

(अग्रतोऽवलोक्य ।) कहं एसा क्खु कञ्चणमाला इदो ज्जेव्व आअच्छदि ता जाव णं उवसप्पामि ।[4]

तत इति । सुगमम् ॥१॥

मदेति । आकाशे शून्ये रङ्गभूमौ कौशाम्बिकाया अभावेऽपि तां लक्ष्यीकृत्य वाह इत्यर्थः । कोसेत्यादि । कौशाम्बिके अपि दृष्टा त्वया भर्त्तुः सकाशे काञ्चनमालानवेति । कौशाम्बिका तन्नाम्नी । अपिः प्रश्ने । भर्त्ता राजः ॥२॥

कर्णमिति । कर्णंदत्त्वाकर्णं नियोज्य । वस्तुतः कस्यापि पात्रस्य प्रतिवचनाभावेपि तच्छ्रुत्वेवाह किमित्यादि । किं भणसि कोपि कालस्तस्या आगत्य गताता इति तत्कुत्रेदानीं प्रेक्षिष्ये । कोपि कालः स्वल्पः कालः । तस्याः काञ्चनमालाया आगत्य गताया आगत्य यद्गमनं तस्यातीतभावस्य स्वल्पःकाल इत्यर्थः । अचिरमेव गतेतिभावः। इति किं भणासीति सम्बन्धः । अत्रोक्तं दशरूपके । किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येक स्तत्स्यादाकाशभाषितमिति ॥३॥

अग्रत इति । कहमित्यादि । कथमेषा खलु काञ्चनमाला इतएवागच्छति तद्यावदेनामुपसर्पामि । यावदवधारणार्थः ॥४॥

(ततः प्रविशति काञ्चनमाला।)[५]

काञ्च। (सोच्छ्वासम्।) साहु रे वसन्तअ साहु अदि-सइदो तुए अमच्चजोअन्धराअणो इमाए सन्धिविग्गह-चिन्ताए॥ ६

मद। (सस्मितमुपसृत्य।) हला कञ्चणमाले किं अज्ज वसन्तएण किदं जेण सो एव्वं सलाहीअदि। ७

काञ्च। हला मअणिए किं तुह एदिणा पुच्छिदेण पओ-अणं तुमं इमं रहस्सं रक्खिदुं ण पारेसि॥ ८

मद। सवामि देवीए चरणेहिं जइ कस्स वि पुरदो पआसेमि॥ ९

---

तत इति। सुगमम्।५॥

काञ्चेति। सोच्छ्वास मूर्द्ध्वश्वासेन सहितम्। साहु इत्यादि। साधु-वसन्तक साधु अतिशयितस्त्वया अमात्ययौगन्धरायणो अनया सन्धि-विग्रहचिन्तया। अतिशयितोन्यकृतः। सन्धिरेकस्य संघटनम्। अमात्यपक्षे षड्गुणान्तर्गतगुणविशेषः। विग्रहो विभागः अन्यस्य पृथक्करणमिति यावत्। अमात्यपक्षे युद्धम्। तयोश्चिन्तया सागरि-कायाः संघट्टनस्य देव्याः पृथक्करणस्य च चिन्तयेत्यर्थः। सन्धिर्भेदे सुरङ्गायां भगे संघट्टनेपि चेति विश्वः। अथ विग्रहः। संग्रामे प्रवि भागे च देहविस्तारयोरपीति त्रिकाण्डशेषः॥६॥

मदेति। हलेत्यादि। सखि काञ्चनमाले किमद्य वसन्तकेन कृतं येन स एवं श्लाघ्यते। येन कर्म्मणा। श्लाघ्यते प्रशस्यते॥७॥

काञ्चेति। हलेत्यादि। सखि मदनिके किं तवैतेन पृष्टेन प्रयोजनं त्वमिदं रहस्यं रक्षितुं न पारयसि। रहसि भवं रहस्यं गोपनीय-मित्यर्थः। रक्षितुं गोपयितुम्। न पारयसि न शक्नोषि॥८॥

काञ्च। जइ एव्वं ता सुणु कधइस्सं अज्ज क्खु मए राअकुलादो पड़िणिउत्तमाणाए चित्तसालिआदुवारे वसन्तअस्स सुसंगदाए समं आलाबो सुदो।[१०]

मद। (सकौतुकम्।) सहि कधेहि कीदिसो सो आलाबो।[११]

काञ्च। एदं बसन्तएण भणिदं जह भोदि सुसङ्गदे णहि साअरिअं वज्जिअ पिअवअस्सस्स अण्णं किम्पि अस्सत्थदाए कारणं ता चिन्तेहि एत्थ पड़िआरं त्ति।[१२]

मद। तदो सुसगंगदाए किं भणिदं।[१३]

---

मदेति। सवेत्यादि। शपे देव्याश्चरणैः यदि कस्यापि पुरतः प्रकाशयामि। शपे दिव्यं करोमि। चरणैरिति बहुत्वं गौरवात्॥९॥

काञ्चेति। जइ इत्यादि। यद्येवं तत् शृणु कथयिष्यामि अद्य खलु मया कुलात् प्रतिनिवर्त्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसङ्गतया समम् आलापः श्रुतः। राजकुलात् राजगृहात्। कुलं जनपदे गृहे इति विश्वः। प्रतिनिवर्त्तमानया प्रत्यागच्छन्त्या। चित्रशालिका चित्रकर्म्मगृहम्। समं सह। साकं सत्रं समं सहेत्यमरः। आलाप आभाषणम्॥१०॥

मदेति। सकौतुकं कौतूहलसहितम्। कौतूहलं श्रवणदर्शनाद्यतिलालसा। सहीत्यादि। सखि कथय कीदृशः सः आलापः॥११॥

काञ्चेति। एदमित्यादि। इदं वसन्तकेन भणितं यथा भवति सुसङ्गते न हि सागरिकां वर्जयित्वा प्रियवयस्यस्य अन्यत् किमपि अस्वस्थतायाः कारणं तच्चिन्तयात्र प्रतीकारमिति। अन्यत् किमपि कारणं न पश्यामीति शेषः॥१२॥

मदेति। तदो इत्यादि। ततः सुसङ्गतया किं भणितम्॥१३॥

काञ्च। तदो ताए एव्वं भणिदं अज्ज क्खु देवीए चित्तफलअवुत्तन्तसङ्किदाए साअरिअं मम हत्थे समप्पअन्तीए जं ताए पिणद्धं णेवत्थं पसादीकिदं तदो तेन जेव्व विरइदभट्टिणीवेसं साअरिअं गेह्णिअ अहम्पि कञ्चणमालावेसधारिणी भविअ पदोसे भट्टिणो सआसं गमिस्सं तुमं पि इध ज्जेव्व ट्ठिदो पडिवालइस्ससि तदो माहवीलदामण्डवे ताए सह भट्टिणो सङ्गमो भविस्सदि ॥१४

मद। हद्धी सुसङ्गदे हदासि जा एव्वं परिअणवच्छलां देवीं वञ्चेसि ॥१५

काञ्च। हला मअणिए दाणिं तुमं कहिं पत्थिदा ॥१६

---

काञ्चेति। तदो इत्यादि। ततस्तया एवं भणितम् अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां मम हस्ते समर्पयन्त्या यत्तया पिनद्धं नेपथ्यं प्रसादीकृतं ततस्तेनैव विरचितभर्त्रीवेशां सागरिकां गृहीत्वा अहमपि काञ्चनमालावेशधारिणी भूत्वा प्रदोषे भर्तुः सकाशं गमिष्यामि त्वमपि इहैव स्थितः प्रतिपालयिष्यसि। ततो माधवीलतामण्डपे तया सह भर्तुः सङ्गमो भविष्यति। शङ्कितया राज्ञः सागरिकायां साभिलाषत्वेन कृताशङ्कया। पिनद्धं परिहितम्। नेपथ्यं भूषणम्। प्रसादीकृतं प्रसन्नतया दत्तम्। प्रदोषे सन्ध्यायाः परम्। इहैव चित्रशालिकाद्वारे। प्रतिपालयिष्यसि प्रतीक्षिष्यसे। तया सागरिकाया ॥१४॥

मदेति। हद्धीत्यादि। हता सुसङ्गते हतासि या एवं परिजनवत्सलां देवीं वञ्चयसे। यात्वम्। परिजनेषु वत्सलां स्नेहवतीम्। स्निग्धस्तु वत्सलो वत्सः स्नेहयुक्तजने भवेदिति शब्दरत्नावली ॥१५॥

मद। अस्सत्थसरीरस्स भट्टिणो कुसलवुत्तन्तं जाणिदुं गदा तुमं चिरअसि त्ति उत्तम्मन्तीए देवीए तुह सआसं पेसिदह्मि ॥१७

काञ्च। अदिउज्जुआ सा दाणिं देवी जा एवं पत्ति-आअदि ॥१८

(परिक्रम्यावलोक्य च।) कहं एत्थ एसो क्खु भट्टा अस्स-त्थदामिसेण मअणावत्थं पच्छादअन्तो दन्ततोरणवल-भीए उववेट्ठो चिट्ठदि ता एहि एदं वुत्तन्तं भट्टिणीए णिवेदेह्म। (इति निष्क्रान्ते।१९)

---

काञ्चेति। हलेत्यादि। अयि मदनिके इदानीं त्वं कुत्र प्रस्थिता॥

मदेति। अस्सत्थेत्यादि। अस्वस्थशरीरस्य भर्त्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं चिरयसीति उत्ताम्यन्त्या देव्या तव सकाशं प्रेषितास्मि। अस्वस्थशरीरस्य अस्वभावस्थशरीरस्य। चिरयसि विलम्बसे। इति हेतोः। उत्ताम्यन्त्या उत्कण्ठां प्राप्नुवत्या ॥१७॥

काञ्चेति। अदीत्यादि। अति ऋजुका सा इदानीं देवी या एवं प्रत्ययते। ऋजुका सरला। एवं वस्तुतोऽस्वस्थत्वमेव ॥१८॥

परीति। कहमित्यादि। कथमत्र एष खलु भर्त्ता अस्वस्थतामिषेण मदनावस्थां प्रच्छादयन् दन्ततोरणवलभ्यामुपविष्टस्तिष्ठति तदेहि एनं वृत्तान्तं भर्त्त्र्यै निवेदयामः। कथमेष भर्त्ता अत्र दन्ततोरणवलभ्यामु-पविष्टस्तिष्ठतीत्यन्वयः। अस्वस्थता पीड़ा तन्मिषेण तद्व्याजेन। मिषं व्याजे स्पर्द्धने चेति मेदिनी। प्रच्छादयन् गोपयन्। दन्ततोरणवलभ्यां दन्तस्य गजदन्तस्य तोरणं द्वारं यस्याः सा तथोक्ता या वलभी सौधो-परिस्थमण्डपाकारवेश्म तस्याम्। तोरणोऽस्त्री वहिर्द्वारमित्यमरः। शुद्धान्ते वलभीचन्द्रशाले सौधोर्द्ध्ववेश्मनीति रभसः। वडभी चन्द्रशाला

प्रवेशकः।[२०]

( ततः प्रविशति मदनावस्थां नाटयन्नुपविष्टो राजा।)[२१]

राजा। (सोत्कण्ठं निश्वस्य)[२२]

सन्तापो हृदय स्मरानलकृतः सम्प्रत्ययं सह्यतां
नास्त्येवोपशमोऽस्य मां प्रति पुनः किं त्वं मुधा ताम्यसि।
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शी न तस्याः करः॥२[३]

---

च प्रासादादौ च मण्डपे इति कोषान्तरम्। वडभीवलभीवडभिः वलभिरिति चातूर्ष्म्यसिति वृद्धाः॥१८॥

प्रवेशको अंगविशेषः। अतीतानामनभिनीतानामपि सुसङ्गतावसन्ताकालापादीनां भविष्यताञ्च भर्त्रीवेशेन सागरिकाप्रवेशादीनां नीचोक्त्या नीचपात्रद्वयकृतसम्प्रयोजनया निदर्शकत्वात्। तल्लक्षणन्तु पूर्व्वमनुसन्धेयम्॥२०॥

तत इति। सुगमम्॥२१॥

राजेति। उत्कण्ठा रागेत्वलब्धविषये वेदनामहतीतुया। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्युक्तलक्षणा॥२२॥

सन्ताप इति। हे हृदय सम्प्रतीदानीं स्मरानलेन कामाग्निना कृतो जनितो अयं सन्तापोदाहः सह्यतामनुभूयताम्। तथाच गारुड़म्। कामादुन्मभ्रमोटरुचिर्दाहो ह्रीनिद्राधीष्टतिच्चय इति। अस्य कामानलकृतसन्तापस्य उपशमः प्रतीकारो नास्त्येव त्वं मामप्रति पुनः किं कथं मुधा व्यर्थं ताम्यसि खिद्यसे। व्यर्थके तु मुधाव्ययमित्यमरः। तनु दुर्व्यखेदेच्छयोरिति कविकल्पद्रुमः। यत् यस्मात् मूढेन कृत्याकृत्यविवेकरहितेन मया तदा कदलीगृहाद्बहिः परिमिलनकाले कथमपि दैवयोगात् प्राप्त आसादितः सान्द्रस्य घनीभूतस्य चन्दनरसस्य चन्दनद्र-

अहो महदाश्चर्य्यं तथाहि।[२४]

मनश्चलं प्रकृत्यैव दुर्लक्ष्यञ्च तथापि मे।
कामेनैतत्कथं विद्धं समं सर्व्वैः शिलीमुखैः॥[२५]

ऊर्द्ध्वमवलोक्य। भोः कुसुमधन्वन्॥[२६]

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विधएव लक्ष्यमिति यल्लोके प्रसिद्धिं गतम्।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम्।[२७]

---

यस्य तन्निर्व्वासस्येवेति यावत् स्पर्शो यस्य तथाभूतस्तस्याः सागरिकायाः करश्चिरमनल्पकालं गृहीत्वा त्वयि न विन्यस्तोऽर्पितः। घनं निरन्तरं सान्द्रमित्यमरः। नाव्ययकृद्विधिः क्रियान्तरकारके इति न्यायात् गृहीत्वेत्यनेन योगे करइत्यत्र न द्वितीया॥२३॥

अहो इति। आश्चर्यं दर्शयति तथाहीति॥२४॥

मन इति। मनः प्रकृत्या स्वभावेन चलं चञ्चलम्। तदुक्तं महाभारते। धैर्य्योपपत्तीर्व्यक्तिश्च विसर्गः कल्पनाक्षमा। सदसच्चाशुता चैव मनसो नव वैगुणा इति। आशुता अस्थिरत्वमिति तट्टीका। दुर्लक्ष्यञ्च अणुत्वादनिरूप्यञ्च। तदुक्तं ब्रह्मवैवर्त्ते। अनिरूप्यमदृश्यञ्च ज्ञानभेदं मनःस्मृतमिति। तथापि मे मम एतन्मनः कामेन मदनेन सर्व्वैः पञ्चभिरेव शिलीमुखैर्वाणैः कथं समं युगपत् विद्धम्। अलिवाणौ शिलीमुखावित्यमरः। चलत्वेनाणुत्वेनच वाणैकेनाप्यवेधनीये वस्तुनि वेधनमेवाश्चर्यं तत्र पुनर्युगपत् पञ्चभिरेवेति महदाश्चर्य्यमिति भावः॥२५॥

ऊर्द्ध्वमिति। कुसुमं धनुर्यस्य स कुसुमधन्वा। धनुषोऽनङ् प्रायोवात् नाम्नि इति वक्तव्यादनङ्॥२६॥

बाणा इति। मनोभवस्य कामस्य पञ्चवाणाः सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा। स्तम्भनश्चेति कामस्य पञ्चवाणाः प्रकीर्त्तिता

विचिन्त्य । न तथाहमेवं विधावस्थमात्मानमनुचिन्तयामि यथान्तर्गूढ़कोपसम्भारया देव्या लोचनगोचरगतां तामेव तपस्विनीं सागरिकां । तथाहि ॥२८

ह्रिया सर्व्वस्याधो नयति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।

---

इत्युक्ताः पञ्चशरा नियताः सार्व्वदिकाः । न कदाचिन्न्यूनातिरिक्ता भवन्तीतिभावः । प्रायो बाहुल्येन अस्मद्विधोऽस्मत् प्रकार एव कामीति यावत् असंख्यो जनस्तेषां पञ्चानां वाणानां लक्ष्यं शरव्यं लोके भुवने इति यत्प्रसिद्धिं गतं ख्यातं तत्त्वयि अधुना विप्रतीपं विपरीतं दृष्टम् । लक्ष्यमिति नित्यक्लीवम् । लक्ष्यं लक्ष्यं शरव्यञ्चेत्यमरः । वैपरीत्यं दर्शयितुं हेतुमाह यस्मादिति । यस्मात् असंख्यैः शरैस्त्वया विद्धो अशरणो रक्षकहीनो अयं कामिजनः पञ्चतां निधनं नीतः प्रापितः । स्यात् पञ्चताकालधर्म्मोदिष्टान्तःप्रलयोऽत्ययः । अन्तो नाशोद्वयोर्मृत्युमरणं निधनोऽस्त्रियामित्यमरः । तथाच वाणानां पञ्चतामलक्ष्यस्यासंख्यतेति लोकप्रसिद्धिः । किन्त्वधुना दृश्यते वाणानामसंख्यता लक्ष्यस्य पञ्चतेति स्पष्टं वैपरीत्यमिति भावः । पञ्चतेति श्लिष्टम् । तदुक्तं दण्डिना । श्लिष्टमिष्टमनेकार्थैकरूपान्वितं वच इति ॥२७॥

विचिन्त्येति । अन्तर्मध्ये गूढो अव्यक्तः कोपसम्भारः कोपसमूहो यस्याः सा तयोक्तया देव्या वासवदत्तायाः । सम्भारः सम्भृतौ गणे इति मेदिनी । लोचनयोर्नेत्रयोर्गोचरे विषये दर्शनयोग्यदेश इति यावत् गतां तां तपस्विनीम् अनुकम्पनीयाम् । तपस्वीतापसे चानुकम्पार्हे चेति विश्वः । सागरिकामेव अनु लक्ष्मीकृत्य यथा चिन्तयामि एवम्विधावस्थम् ईदृक् दशापन्नमात्मानं नाहं तथानुचिन्तयामि । चिन्तनीयतां प्रतिपादयितुमाह तथाहीति ॥२८॥

सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥२९

प्रेषितश्च मया तद्वार्त्तान्वेषणाय वसन्तकस्तत् कथं चिरयति ।३०

( ततः प्रविशति हृष्टो वसन्तकः ॥ )३१

वस । सपरितोषम् । ही ही भो कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स हिअअपरिदोसो आसी जादिसो मम सआसादो अज्ज पिअवअणं

---

ह्रियेति । सर्व्वस्य जनस्य विदितास्मि राजाभिलाषितया ज्ञातास्मि इति ह्रिया इति लज्जया वदनमधोनयति नमयति । विदितेति ज्ञानार्थत्वात् वर्त्तमाने क्तः । तद्योगात् कामुक सङ्गेति कर्त्तरि षष्ठी । द्वयोः कयोश्चित् आलापम् एकत्ववचनप्रवृत्तिं दृष्ट्वा आत्मविषयां स्वसम्बन्धिनीं कथां कलयति अवधारयति । तथा सखीषु स्मेरासु ईषद्धसन्तीषु सतीषु अधिकमतिरिक्तं वैलक्ष्यं विस्मयं प्रकटयति प्रकाशयति । स्मेरेति ह्रिंसदीपेतिरः । अतः प्रिया सागरिका प्रायेण बाहुल्येन सदैवेति यावत् । प्रायो भून्म्यनगमने इत्यमरः । हृदये मनसि निहितः स्थापितो य आतङ्कः शङ्का तेन विधुरा विकला सत्यास्ते तिष्ठति । विधुरं विकले त्विष्यिति त्रिकाण्डशेषः । अत्र स्वभावोक्तिरलङ्कारः ॥२९

प्रेषित इति । तद्वार्त्ता सागरिकावृत्तान्तः तस्या अन्वेषणाय ज्ञानाय ॥३०॥

तत इति । हृष्टः सूचित हर्षः ॥३१॥

वसेति । हीही इत्यादि । हीही भोः कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयपरितोष आसीत् यादृशो मम सकाशादद्य प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि तद्यावद्गत्वा प्रियव-

सुणिअ उव्विस्सदि त्ति तक्केमि ता जाव गदुअ पिअवअस्सस्स णिवेदइस्सं ॥ [२]

(परिक्रम्यावलोक्य च।) कधं एसो पिअवअस्सो जहा इमं ज्जेव्व दिसं अवलोअन्तो चिट्ठदि तहा तक्केमि मं ज्जेव्व पड़िवालेदि ता जाव णं उवसप्पामि। (इत्युपसृत्य।) जअदु जअदु पिअवअस्सो भो वअस्स दिट्ठिआ वड्ढसि तुमं समीहिदकज्जसिद्धीए ॥[२३]

राजा। (सहर्षम्।) वयस्य अपि कुशलं प्रियायाः सागरिकायाः ॥[२४]

विदू। (सगर्व्वम्।) भो अइरेण सअं जेव्व पेक्खिअ जाणिस्सदि।[२५]

---

यस्यस्य निवेदयिष्यामि। हीहो हास्ये। हीहीशब्दो विस्मयहास्ययोरिति मेदिनी। कौशाम्बी उदयननगरी तस्या राज्यं राजत्वं तस्य लाभेन। प्रियवचनं सम्भावितप्रियासमागमवचनम्। यावद- वधारणार्थः ॥२२॥

परीति। कधमित्यादि। कथमेष प्रियवयस्यः। यथा इमामेव दिशमवलोकयं स्तिष्ठति तथा तर्कयामि मामेव प्रतिपालयति तद्यावदु- पसर्पामि। प्रतिपालयति प्रतीक्षते। इति वदन्नुपसृत्य उपगम्याह जअदु इत्यादि। जयति जयति प्रियवयस्यः भो वयस्य दिष्ट्या वर्द्धसे त्वं समीहितकार्य्यसिद्धा। दिष्ट्या आनन्दे। वर्द्धसे अभ्युदेषि। समी- हितस्य वाञ्छितस्य कार्य्यस्य सिद्धा निष्पत्त्या। सिद्धिर्निष्पत्तियोग- योरिति विश्वः ॥२३॥

राजेति। अपिः प्रश्ने ॥२४॥

राजा। (सपरितोषम्।) वयस्य दर्शनमपि भविष्यति प्रियायाः।२६

विदू। (साहङ्कारम्।) भो कीस ण भविस्सदि जस्स दे उवहसिदबिहप्पदि बुद्धिविहवो अअं अमच्चो।२७

राजा। (विहस्य।) न खलु चित्रं किं न सम्भाव्यते त्वयि तत्कथय विस्तरतः श्रोतुमिच्छामि।२८

विदू। (कर्णे एवमेवं कथयति।)२९

राजा। (सपरितोषम्।) वयस्य इदं ते पारितोषिकमिति॥ (हस्तादवतार्य्य कटकं ददाति।)४०

विदू। (कटकं परिधाय आत्मानं निर्व्वर्ण्य।) भोदु एव्वं दाव सुद्धसोवस्सकडअमंडिअहत्थीं अत्तणो बह्मणीए गदुअ दंसइस्सं॥४१

---

विदू इति। भो इत्यादि। भो अचिरेण स्वयमेव प्रेच्यज्ञास्यसि। ज्ञास्यसि कुशलमिति शेषः॥२५॥

राजेति। सुगमम्॥२६॥

विदू इति। भो इत्यादि। भोः कस्मान्न भविष्यति यस्य ते उपहसितवृहस्पतिवुद्धिविभवो अयममात्यः। उपहसितो अवज्ञातो वृहस्पतेर्वुद्धिविभवो धीशक्तिर्येन सः॥२७॥

राजेति। सम्भाव्यते मन्यते। विस्तरतः साकल्येन॥२८॥

विदू इति। एवमेवं सर्व्वं सुसङ्गताकथितमित्यर्थः॥२९॥

राजेति। कटकं वलयम्॥४०॥

विदू इति। निर्व्वर्ण्य दृष्ट्वा। भोदु इत्यादि। भवतु एवं तावत् शुद्धसौवर्णकटकमण्डितहस्तमात्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि। शुद्धेन निर्म्मलेन सौवर्णकटकेन हैमवलयेन मण्डितो अलंकृतो यो हस्तस्तम्। ब्राह्मण्यै इति उद्देश्यतामात्रविवक्षया चतुर्थी॥४१॥

राजा । ( हस्ते गृहीत्वा निवारयन् । ) सखे पश्चाद्धैर्यं
धैर्यिष्यसि ज्ञायतां तावदधुना किमवशिष्टमह्न इति । ४२

विदू । (परिक्रम्यावलोक्य च सहर्षम् । ) भो पेक्ख पेक्ख
एसो क्खु गुरुआणुराअक्खित्तहिअओ सञ्झावहूदिस्स-
सङ्केदो विअ अत्थ गिरिसिहरकाणणं अणुसरदि भअवं
सहस्सरस्सी ॥ ४३

राजा । (विलोक्य सहर्षम् । ) सखे सम्यगुपलक्षितं
पर्य्यवसितमहः ॥ ४४

तथाहि ।

अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः ।

---

राजेति । निवारयन् गमनादिति शेषः । किं कियत् । अव-
शिष्टं विद्यमानम् । अह्नो दिवसस्य ॥ ४२ ॥

विदू इति । भो इत्यादि । भोः प्रेक्षस्व प्रेक्षस्व गुर्व्वनुरागोत्
क्षिप्तहृदयः सन्ध्यावधूदत्तसङ्केत इव अस्तगिरिशिखरकाननमनुस-
रति भगवान् सहस्ररश्मिः । गुरुणा महता अनुरागेण उत्क्षिप्त-
मुच्चलितं हृदयं मनो यस्य सः । सन्ध्यैव वधूर्भार्य्या तया दत्तः सङ्केत
इङ्गितं यस्य स तथोक्त इव । वधूः स्नुषा नवोढा स्त्रीभार्य्या एका-
ङ्गनास्विति विश्वः । अनु लक्ष्मीकृत्य सरति गच्छति । सहस्ररश्मिः
सूर्य्यः ॥ ४३ ॥

राजेति । सम्यक् सत्यम् । उपलक्षितम् अवधारितम् । पर्य्य-
वसितं समाप्तम् । तद्दर्शयितुमाह तथाहीति ॥ ४४ ॥

अध्वानमिति । एकं चक्रं यस्य स तथोक्तो मे मम रथः । एक

संध्याकृष्टावशिष्टस्वकरपरिकर स्पष्टहेमारपंक्ति
व्याकृष्यावस्थितोऽस्तचितिभृति नयतीवैष दिक्चक्रमर्कः॥४५
अपिच॥४६
यातोऽस्मि पद्मनयने समयो ममैष

---

चक्रो रथो यस्य दिव्यः कनकभूषित इति आदित्यहृदयम्। भुवनस्य जगतो भ्रान्त्या आवर्त्तनेन दीर्घमनल्पमध्वानं पन्थानं विलंघ्य वाहयित्वा तेनाध्वना परिश्रमस्येति यावत्। प्रातः प्रभाते पुनः प्राग्भुदयगिरिमासादयितुं न प्रभवति न शक्नोति मनसि इति एवम्प्रकारेण न्यस्तो अर्पितश्चिन्ताया अतिभारो येन स तथोक्त एषोऽर्कः सविता अस्तचितिभृति अस्ताचले अवस्थितः कृतावस्थानः सन् दिक् चक्रं दिङ्मण्डलरूपं चक्रं व्याकृष्य सन्ध्यया आकृष्टानां स्वकराणामवशिष्टो यः स्वस्यात्मनः करपरिकरः किरणसमूहस्तदात्मिकां स्पष्टां व्यक्तां हेमारपंक्तिं सुवर्णमयारश्रेणीं नयति प्रापयतीव। एकचक्ररथेन सुदीर्घाध्वलङ्घनचिन्ताकुलः सूर्य्यश्चक्रान्तरं गृहीत्वा बलारश्रेणीं योजयतीवेति भावः। अरानाम चक्राभ्यन्तरगता काष्ठविशेषाः सवितरथस्य सुवर्णमयत्वात् सुवर्णारपंक्तियोजनमेवोचितम्। तथा च श्रुतिः। हिरण्मयेन सविता रथेना देवोयातीति। रविकराः सन्ध्यायां मूर्द्धाधःपार्श्वदिङ्मण्डलं व्याप्नुवन्ति तदुत्प्रेक्षते सविता चक्रान्तरयोजनेच्छाया किरणात्मकान् हेमारान् दिङ्मण्डलरूपं चक्रं नयतीवेति। अतोत्ररूपकानुप्राणितोत्प्रेक्षालङ्कारः। हेमारपंक्तीति पाठे तु सन्ध्याकृष्टावशिष्टस्वकरपरिकरेण सन्ध्याकृताकर्षणाद्विरलीभूतनिजकिरणसमूहेन तम्मबनीत यावत् स्प-ायक्ता हेमारपंक्तिर्यत्र तत् तथाभूतं दिक्चक्रं व्याकृष्य नयति रथं प्रापयति तादृश चक्रान्तरेण रथं योजयतीवेत्यर्थः॥४५॥

प्रकारान्तरेण वर्णयितुमाह अपि चेति॥४६॥

सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्य्योऽस्तमस्तकनिविष्टकरः करोति ॥४७

तदुत्तिष्ठ तत्रैव माधवीलतामण्डपे गत्वा प्रियतमासङ्केतावसरं प्रतिपालयावः ।४८

विदू । सोभणं भणिदं ॥ (इत्युत्तिष्ठतः ॥)

विदू । (विलोक्य ।) भो वअस्स पेक्ख पेक्ख एसो क्खु

---

यात इति । अस्तस्य पश्चिमाचलस्य मस्तके निविष्टो अर्पितः करः किरणः पक्षे हस्तो येन सोयं सूर्य्यः । अस्तस्तु चरमक्ष्माभृदिति बलिहस्तांशवः करा इति चामरः । पद्मं पुष्पं नयनं यस्याः सा हे तयोक्ते अहं यातोऽस्मि गतोऽस्मि मम एष समयः गमनकालः किम्वा मम एष समयः शपथः यत्सुप्ता निमीलितपद्मा भवती मया प्रतिबोधनीया उन्मीलित नयनीकार्य्यैव । समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः । इति एवम्प्रकारेण सरोरुहिण्याः पद्मिन्या लतायाः प्रत्यायनां प्रत्ययोत्पादनं करोतीव । लोकोपि पुत्त्रादिस्निग्ध जनमस्तकं स्पृष्ट्वा शपथेन प्रत्ययमुत्पादयति । यदाह बृहस्पतिः । देव ब्राह्मणपादांश्च पुत्त्रदारशिरांसि च । एतेन शपथाः प्रोक्तामनुना स्वल्पकारणे इति । अत्रोत्प्रेक्षालङ्कारः । यदुक्तं काव्यादर्शे । अन्यथैव स्थितावृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते यत्तु तामुत्प्रेक्षां विबुधा इति ॥४७॥

तदिति । प्रियतमायाः सागरिकायाः संकेतावसरं संकेत समयम् ॥४८॥

विदू इति । सोभणं भणिदं शोभनं भणितम् । इति एतद्वचनानन्तरम् । उत्तिष्ठत उभाविति शेषः ॥४९॥

बहलीकिदविरलवणराइसन्निवेसो गहीदघणपङ्कपीवरव-णवराहमहिसकसणच्छवी पसरदि पुव्वदिसं पच्छादअन्तो तिमिरसंघाओ। ५०

राजा। (सहर्षं समन्ताद्विलोक्य।) वयस्य सम्यगु-पलक्षितम्॥ तथाहि ५१

पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात् क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति।
उपेतः पीनत्वं तदनु च जनस्येक्षणफलं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः॥ ५२

---

विदू इति। भो इत्यादि। भो वयस्य प्रेक्षस्व प्रेक्षस्व एष खलु बहलीकृतविरलवनराजिसन्निवेशो गृहीतघनपङ्कपीवरवनवराहम-हिषकृष्णच्छविः प्रसरति पूर्वदिशं प्रच्छादयं स्तिमिरसङ्घातः। बह-लीकृतो घनीकृतो विरलः वस्तुतः सान्तरो वनराजीनां वनश्रेणीनां सन्निवेशो निवेशो येन सः। घनेन पंकेन कर्दमेन पीवराः स्थूला ये वनवराहा महिषाश्च गृहीतालब्धा तेषामिव कृष्णाच्छविर्द्युतिर्येन सः। तिमिरसङ्घातस्तिमिरसञ्चयः। स्थूलपीवरे इति सोमौघनिकरव्राव-वारसङ्घातसञ्चया इति चामरः॥ ५०॥

राजेति। सुगमम्॥ ५१॥

पुर इति। हरकण्ठस्य नीलकण्ठगलस्य द्युतिं कृष्णां त्विषं हरति यः सोऽयं तमसोऽन्धकारस्य सङ्घातः सञ्चयः पुरो अग्रे पूर्वामेव दिशं ततोऽनन्तरमन्यां दिशमपि स्थगयति आच्छादयति। व्यवधानं तिरो-धानमन्तर्द्धिरपवारणम्। इदनं व्यवधानन्तर्द्धीपिधानस्थगनानि चेति हेमचन्द्रः। क्रमात् क्रामन् आक्रामन् अद्रिद्रुमपुराणां पर्वतवृक्षनग-राणां विभागान् विशेषान् तिरयति अन्तर्द्धापयति। तिरोऽन्तर्द्धावि-त्यमरः। केःतत्याख्याने ज्ञिरिति ज्ञिःडिद्वद्भावात् दिलोपः। तदनु

तदादेशय मार्गम् ।[५३]

विदू । एदु एदु पिअवअस्सो ॥ (इति परिक्रामतः ।)[५४]

विदू । (निरूप्य ।) भो वअस्स एदं क्खु समासण्णं बहल-पादवदाए पिण्डीकिदन्धआरं विअ मअरन्दुज्जाणं ता कधं एत्थ मग्गो लक्खीअदि ।[५५]

राजा । (गन्धमाघ्राय ।) वयस्य गच्छाग्रतः ननु सुपरिज्ञातएवात्र मार्गः ॥ तथाहि[५६]

पालीयञ्चम्पकानां नियतमयमसौ सुन्दरः सिन्धुवारः
सान्द्रा वीथी तथेयं वकुलविटपिनां पाटला पंक्तिरेषा ।

---

तदनन्तरं पीनत्वं स्थूलत्वमुपेतः सन् जनस्य लोकस्य ईक्षणस्य चक्षुष फलं दृष्टिञ्च हरति ॥५२॥

तदिति । सुगमम् ॥५३॥

विदू इति । एदु इत्यादि । एतु एतु प्रियवयस्यः ॥५४॥

विदू इति । निरूप्य विचार्य्य । भो इत्यादि । भो वयस्य इदं खलु समासन्नं बहलपादपतया पिण्डीकृतान्धकारमिव मकरन्दोद्यानं तत्कथमत्र मार्गो लक्ष्यते । समासन्नं संमुखगतम् । मकरन्दोद्यानमित्यनेनान्वितम् । बहला घनाः पादपा द्रुमा यत्र तत्तया । पिण्डीकृतं सान्द्रीकृतमन्धकारं तिमिरमिव । पिण्डं सान्द्रे बले बोले इति विश्वः ॥५५॥

राजेति । सुगमम् ॥५६॥

घ्राणेन मार्गपरिचयं दर्शयति पालीति । इयं चम्पकानां पालीपंक्तिः । पालिः कर्णलताग्रेऽश्रौ पंक्तावङ्कप्रभेदयोरिति मेदिनी । नियतमवश्यमसौ दृष्टपूर्व्वः सुन्दरः सिन्धुवारोऽयम् । तथा वकुलविटपिनां वकुलपादपानामियं सान्द्रा निरन्तरा वीथी श्रेणी । घनं निरन्तरं सान्द्रमिति । वीथ्यालिरावलिः पंक्तिश्रेणी इति चामरः । एषा

आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मिन्
व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमोनिह्नुतोप्येष चिह्नैः ॥५७

( इति परिक्रामतः ।५८ )

विदू॥ भो एदं क्खु णिपड़न्तमत्तमहुअरवउलकुसुमामोदवासितदिसामुहं मसिणमरगअमणिसिलाकुट्टिमसुहाअन्तचरणसञ्चारसूइदं तं ज्जेव्व माहवीलदामण्डपं संप्पत्तह्म ता इध ज्जेव्व चिट्ठदु भवं जाव अहं देवीवेसधारिणीं साअरिअं गेह्णिअ लहुं आअच्छामि ॥५९

---

पाटलानां वृक्षाणां पंक्तिः। विविधं नानारूपम्। विविधः स्याद्बहुविधो नानारूपः पृथग्विध इत्यमरः। गन्धम् आघ्रायाघ्राय एवमधिगतैरित्थमनुभूतैः पादपैस्तरुरूपैश्चिह्नैः करणैरस्मिन् मकरन्दोद्याने द्विगुतरेण वृक्षच्छायया द्विगुणीभूतेन तमसा अन्धकारेण निह्नुतोपि गोपितोपि अदृश्यतां नीतोऽपीति यावत्। एष पन्था व्यक्तिं व्यक्ततां प्रयाति प्राप्नोति ॥५७॥

इतीति। सुगमम् ॥५८॥

विदू इति। भो इत्यादि। भो एतं खलु निपतन्मत्तमधुकरबकुलकुसुमामोदवासितदिङ्मुखं मसृणमरकतमणिशिलाकुट्टिमसुखायमानचरणसञ्चारसूचितं तमेव माधवीलतामण्डपं सम्प्राप्ताः स्मः तदिहैव तिष्ठतु भवान् यावदहं देवीवेशधारिणीं सागरिकां गृहीत्वा लघु आगच्छामि। निपतन्त उपविशन्तो मत्तमधुकरा मत्तभ्रमरा येषु तथा भूतानां बकुलकुसुमानामामोदेन गन्धातिशयेन वासितानि सुरभीकृतानि दिङ्मुखानि यस्मिन् स तथोक्तम्। मसृणेनाकर्कशेन मरकतमणिशिलायाः कुट्टिमेन बद्धभूभागेन सुखायमानः सुखमनुभवन्

राजा। तेन हि (त्वर्य्यताम्।)[६०]

विदू। वअस्स मा उत्तम्म एसो आअदोह्मि॥

(इति निष्क्रान्तः॥[६१]

राजा। तावदहमप्यस्यां मरकतशिलावेदिकायामुपविश्य प्रियायाः सङ्केतावसरं प्रतिपालयामि॥[६२]

(उपविश्य सचिन्तम्।) अहो कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवजनंप्रति पक्षपातः।[६३]

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ।

---

यश्चरणसञ्चारः पादविन्यासस्तेन सूचितमनुमापितम्। माधवीलतामण्डपभूभागस्य मरकतमणिमयत्वादिति भावः। मसृणोटकर्कशे स्निग्धे इति विश्वः। कुट्टिमं बद्धभूमिः स्यादिति हलायुधः॥५९॥

राजेति। त्वर्य्यतां सत्वरेण भूयताम्॥६०॥

विदू इति। वअस्सेत्यादि। वयस्य माउत्ताम्य एष आगतोऽस्मि। मा उत्ताम्य उत्कण्ठितो माभव॥६१॥

राजेति। प्रतिपालयामि प्रतीक्षे॥६२॥

उपविश्येति। अहो विस्मये। कोपि अनिर्व्वचनीयः। स्वगृहिण्या निजभार्य्यायाः समागमं सम्भोगं परिभवति नाद्रियते यस्तस्य। पक्षपातोऽनुरागः। अनादरः परिभव इत्यमरः॥६३॥

तदेव दर्शयति प्रणयेति। हि यस्मात् संकेतस्थानं वसमागमाय विविक्तविशेषे स्थिता कामिनी शङ्किता सभया सती वक्त्रे नायकमुखे प्रणयेन प्रेम्णा विशदां निर्म्मलां दृष्टिं न ददाति। कण्ठाश्लेषे कण्ठालिङ्गनकाले रसादनुरागात्पयोधरौ स्तनौ घनं निरवकाशं यथास्यात्तथा न घटयति योजयति। शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस-

वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां सङ्केतस्था तथापि हि कामिनी ॥६४

अये कथञ्चिरयति वसन्तकः तत्किन्नु खलु विदितः स्यादयं वृत्तान्तो देव्या वासवदत्तया ॥६५

( ततः प्रविशति वासवदत्ता काञ्चनमाला च । )

वास। हञ्जे काञ्चणमाले सच्चं ज्जेव मह वेसधारिणी भविअ साअरिआ अज्जउत्तं अहिसरिस्सदि त्ति ॥६७

काञ्च। कधं असाधा भट्टिणीए णिवेदिअदी अह वा चित्तसालिआदुवारे उवविट्ठो वसन्तओ ज्जेव्व दे पच्चअं उप्पादइस्सदि ॥६८

---

इत्यमरः। तथा प्रयत्नेन बलेन धृतापि बहुशो वारं वारं गच्छामीति वदति तथापि एवं रसविच्छेदेपि रमयति तराम् अतिशयेनानुरागिणं करोति अतोऽभिनवजनं प्रत्यनुरागोऽनिर्वचनीयः। रमयतितरामिति किमेव्याम्वादृव्ये चतरां चतमामिति चतराम्। अत्र स्वभावोक्तिरलंकारः ॥६४॥

अये इति। अये इति स्मरणे। चिरयति विलम्बयति। वृत्तान्तो वार्त्ता ॥६५॥

तत इति। सुगमम् ॥६६॥

वासेति। हञ्जे इत्यादि। अयि काञ्चनमाले सत्यमेव मम वेशधारिणीभूत्वा सागरिका आर्य्यपुत्रमभिसरिष्यतीति। अभिसरिष्यति आर्य्यपुत्रस्याभिसारिका भविष्यति। कान्तार्थिनी तु या याति संकेतं साभिसारिकेत्यमरः ॥६७॥

काञ्चेति। कथमित्यादि। कथमन्यथा भर्त्त्र्यै निवेद्यते। अथवा चित्रशालिकाद्वारे उपविष्टो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति। अन्यथा असत्येन ॥६८॥

वास । तेण हि तदो तहिं एव्व गच्छह्म ।६९

काञ्च । एदु एदु भट्टिणी । (इति परिक्रामतः ।)७०

(ततः प्रविश्योपविष्टः कृतावगुण्ठनो वसन्तकः ।)७१

विदू । कर्णं दत्त्वा । जह अअं चित्तसालिआदुवारे पदसद्दो सुणीअदि तह तक्केमि आअदा साअरिआ त्ति ।७२

काञ्च । भट्टिणि इयं सा चित्तसालिआ ता इध ज्जेव्व चिट्ठ अहं पि वसन्तअस्स सण्णं देमि । (इति छोटिकां ददाति ।)७३

विदू । (सहर्षं उपसृत्य सस्मितम् ।) सुसङ्गदे सरिसो क्खु तुए किदो कञ्चणमालाए वेसो अध साअरिआ दाणिं कहिं ।७४

---

वासेति । तेणेत्यादि तेनहि तदा तत्रैवगच्छामः । तत्रैव चित्रशालिकाद्वारे ॥६९॥

काञ्चेति । एदु इत्यादि । एतु एतु भर्त्री ॥७०॥

ततइति । कृतावगुण्ठनः कृतशिरश्छादनः ॥७१॥

विदूइति । जहेत्यादि । यथायं चित्रशालिकाद्वारे पदशब्दः श्रूयते तथा तर्कयामि आगता सागरिकेति ॥७२॥

काञ्चेति । भट्टिणीत्यादि । भर्त्रि इयं सा चित्रशालिका तदिहैव तिष्ठ अहमपि वसन्तकस्य संज्ञां ददामि । संज्ञां हस्तादिकृतार्थसूचनाम् । संज्ञा स्याच्चेतनानामहस्ताद्यैश्चार्थसूचनेत्यमरः । छोटिका अङ्गुलिध्वनिः ॥७३॥

विदूइति । सुसमित्यादि । सुसङ्गते सदृशः खलु त्वया कृतः काञ्चनमालाया वेशः अथ सागरिकेदानीं कुत्र । सदृशोऽविकलः । अथ शब्दः प्रश्ने ॥७४॥

काञ्च। (अङ्गुल्या दर्शयन्ती।) यं एसा॥७५

विदू। (दृष्ट्वा सविस्मयम्।) एसा फुडं ज्जेव्व देवी वासवदत्ता।७६

वास। (साशङ्कमात्मगतम्।) कहं पच्चभिणादह्मि एदेण ता गमिस्सं। (इति गन्तुमिच्छति।) ७७

विदू। भोदि साअरिए इदो आअच्छ।७८

वास। (विहस्य काञ्चनमालामवलोकयति।)७९

काञ्च। (अपवार्य्य अङ्गुल्या वसन्तकं तर्जयन्ती।) हदास सुमरिस्ससि एदं वअणं।८०

विदू। तुवरदु तुवरदु साअरिआ एसो क्खु पुव्वदिसादो उग्गच्छदि भअवं मिअलञ्छणो।८१

---

काञ्चेति। दर्शयन्ती वासवदत्तामिति शेषः। यं एसा नन्वेषा॥७५॥

विदूइति। एसेत्यादि। एषा स्फुटमेव देवी वासवदत्ता। स्फुटं स्पष्टम्। संवृत्तेत्यध्याहार्य्यक्रियाविशेषणम्॥७६॥

वासेति। साशङ्कमिति। वसन्तकवाक्यस्य वासवदत्तैवेयमित्यभिप्राय साशंक्येत्यर्थः। कहमित्यादि। कथं प्रत्यभिज्ञातास्मि एतेन तद्गमिष्यामि। प्रत्यभिज्ञाता वासवदत्तात्वेन निश्चिता। एतेन वसन्तकेन॥७७॥

विदूइति। भोदीत्यादि। भवति सागरिके इत आगच्छ॥७८॥

वासेति। सुगमम्॥७९॥

काञ्चेति। अपवार्य्य परिवृत्य। हदेत्यादि। हताश स्मरिष्यसि इदं वचनम्। हताश निष्फलाभिलाष॥८०॥

विदूइति। तुवेत्यादि। त्वरतां त्वरतां सागरिका एष खलु पूर्वदिश उद्गच्छति भगवान् मृगलाञ्छनः। मृगलाञ्छनश्चन्द्रमाः॥८१॥

वास । (ससम्भ्रममपवार्य्य ।) भअवं मिअलञ्छणो णमो दे मुहुत्तअं दाव ओवारिदसरीरो होइ जेण पेक्खामि से भावाणुबन्धं । ८२

सर्व्वे परिक्रामन्ति ॥ ८३

राजा । (सोत्कण्ठमात्मगतम् ।) उपस्थितप्रियासमागमस्यापि किञ्चिदमत्यर्थमुत्ताम्यति मे मनः । अथवा । ८४

तीव्रः स्मरसन्तापो न तथादौ बाधते यथासन्ने ।
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः । ८५

---

वासेति । भअवमित्यादि । भगवन् मृगलाञ्छन नमस्ते मुहूर्त्तं तावदपवारित शरीरोभव येन प्रेक्षे अस्य भावानुबन्धम् । मुहूर्त्तं किञ्चित्कालम् । अपवारितशरीरो अन्तर्हितशरीरः । अन्तर्द्धिरपवारणमित्यमरः । अस्य राज्ञः । भावानुबन्ध मुत्तरोत्तरचेष्टाम् ॥ ८२॥

सर्व्वेइति । सुगमम् ॥ ८३॥

राजेति । उत्कण्ठा रागेत्वलब्धविषये वेदना महतीतुया । संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्युक्ता । उपस्थितआसन्नः प्रियायाः समागमः सङ्गतिर्यस्य स तस्य । किं कथम् । उत्ताम्यति उत्कण्ठितं भवति । आसन्नप्रियासमागमस्य उत्कण्ठातिशयमुपपादयितुमाह अथवेति ॥ ८४॥

तीव्रइति । तीव्रएकान्तः स्मरसन्तापः कामजदाहः आसन्ने प्रियजने निकटवर्त्तिनि सति यथाबाधते पीडयति आदौ तदासत्तेः पूर्व्वं तथा न बाधते । तदेव दर्शयति प्रावृषि वर्षाकाले अभ्यर्णो अचिरभावी जलागमो वृष्टिपातो यस्मिन् स तथाभूतो दिवसः नितरामतिशयेन तपति सन्तापयति । उभयत्रैकस्य सन्तापकलधर्म्मस्य निर्द्देशात् प्रतिवस्तूपमालङ्कारः । यदुक्तं दर्पणे । प्रतिवस्तूपमातुस्याद्वाक्ययोर्गम्यसाम्ययोः । एकोपि धर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथगिति ॥ ८५॥

विदू। (आकर्ण्य।) भोदि साअरिए एसो क्खु पिअ-वअस्सो तुमं ज्जेव्व उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि ता चिट्ठ तुमं णिवेदेमि से तुहागमणं।[८६]

वास। (शिरःसंज्ञां ददाति।)[८७]

विदू। (राजानमुपसृत्य।) भो वअस्स दिट्ठिआ वड्ढसि एसा क्खु मए आणीदा साअरिआ।[८८]

राजा। (सहर्षं सहसोत्थाय।) क्वासौ क्वासौ।[८९]

विदू। (सभ्रूभङ्गम्। णं एसा॥[९०]

राजा। (उपसृत्य।) प्रिये सागरिके।[९१]

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ

रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ।

---

विदूइति। भोदीत्यादि। भवति सागरिके एष खलु प्रियवयस्य स्त्वामेव उद्दिश्य उत्कण्ठानिर्भरं मन्त्रयति तत् तिष्ठ त्वं निवेदयाम्यस्मै तवागमनम्। उत्कण्ठाया निर्भरो अतिशयो यत्र तत् यथा स्यात् तथा मन्त्रयति मन्दं व्याहरति॥८६॥

वासेति। शिरः संज्ञां शिरोवक्रणेनानुमतिम्॥८७॥

विदूइति। भोइत्यादि। भो वयस्य दिष्ट्या वर्द्धसे एषा खलु मया आनीता सागरिका। दिष्ट्या आनन्दे। बर्द्धसे अभ्युदितोसि॥८८॥

राजेति। असौ सागरिका। हर्षात् द्विरुक्तिः॥८९॥

विदूइति। सभ्रूभङ्गं भ्रूसंज्ञया दर्शयन्नित्यर्थः। णं एसा नन्वेषा॥९०॥

राजेति। सुगमम्॥९१॥

शीतांशुरिति। प्रिये सागरिके तव मुखं शीतांशुश्चन्द्रमाः दृशौ चक्षुषी उत्पले करौ पाणी पद्मे अनुकुरुतः सदृशीकुरुत इतिपद्मानुकारौ।

इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्व्वापय ॥६२

वास। (सवाष्पमपवार्य्य।) कञ्चणमाले एव्वं सव्वं म-
न्तेदि अज्जउत्तो पुणोबि कहं मं आलम्बिस्सदि त्ति अह्नो
अच्चरीअं।६३

---

ष्ठत् यस्मिंस्तिष्ठत्। तव ऊरुयुगलं रम्भायाः कदल्याः योगर्भो अभ्यन्तरं तन्निभं तत्सदृशम्। स्युरुत्तरपदेत्वमी। निभसङ्काशनीकाशप्रतिकाशोपमादय इत्यमरः। बाहू भुजौ मृणालोपमौ मृणालसदृशौ इति उक्तरूपेण आह्लादकराणि सन्तापहराणि अखिलानि समस्तानि अङ्गानि यस्याः सा हे तथोक्ते त्वम् एहि एहि रभसात् हर्षात् वेगाद्वा। रभसो हर्षवेगयोरिति मेदिनी। मां निःशङ्कं निर्भयमालिङ्ग्य अनङ्गतापेन कामजदाहेन विधुराणि विकलानि अङ्गानि निर्व्वापय शीतलीकुरु। कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षय इतिगारुडम्। विधुरं विकले त्विष्विति त्रिकाण्डशेषः। चन्द्रांशुकुमुद पद्मादीनां दाहशान्तिकरत्वमाह चरकः। शीतवात जलस्पर्शः शीतान्युपवनानि च। क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च। चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः। इत्यादि। सुश्रुतोपि। शीतं विधानमतऊर्द्धमहं प्रवक्ष्ये दाहप्रशान्तिकरमृद्धिमतां नराणाम्। तत्रादितो मलयजेन हितः प्रदेहश्चन्द्रांशुहार तुहिनोदक शीतलेन। शीताम्बुशीतलतरैश्च शयानमेवं हारैर्मृणालवलयैरबलाःस्पृशेयुः। भिन्नोत्पलोज्ज्वलहिमे शयने शयीत पत्रेषु वा सजलबिन्दुषु पद्मिनीनाम्। तथा। चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञा ग्लानं सुदीन मनसं मनसोऽनुकुलाः। पीनस्तनोरु जघना घनसारदिग्धास्ताएव सार्द्रवसनाः सहसं विशेयुः। श्लिष्टाबलाः शिखिलमेखलहारयष्ट्यइति ॥६२॥

वासेति। कञ्चेत्यादि। काञ्चनमाले एवं स्वयं मन्त्रयति आर्य्यपुत्रः

काञ्च। (अपवार्य्य।) भट्टिणि एव्वं ष्णेदं किं उण अवरं साहसिआणं पुरिसाणं ण दुक्करं सम्भावीअदि।९४

विदू। भोदि साअरिए कीस वीसद्धा भविअ पिअव-अस्सं ण आलावेसि अज्ज वि ताए णिच्चरुट्टाए देवीए वासवदत्ताए दुव्वअणेहिं कडुइदाइं सोत्ताइं सम्पदं सुहा-वेदु तुह मडुरवअणोवणासो।९५

वास। (अपवार्य्य सरोषस्मितम्॥) हञ्जे कञ्चणमाले अहं ईदिसी कडुअभासिणी अज्जवसन्तओ उण पिअंवदो९६

काञ्च। (अपवार्य्य अङ्गुल्या तर्जयन्ती॥) हदास सुम-रिस्ससि एदं वअणं।९७

---

पुनरपि कथं नामालपिष्यतीति अहो आश्चर्य्यम्। एवं स्पष्टप्रकटित सागरिकानुरागम् ॥९३॥

काञ्चेति। भट्टिणीत्यादि। भर्त्त्रि एवमिदं किं पुनरपरं साह-सिकानां पुरुषाणां न दुष्करं सम्भाव्यते। किं पुनः किन्तु। अपरमेतद-न्यत्कर्म्म। यदा एतदेव कृतं तदा कथमन्यत् कर्त्तुं नशक्यते इतिभावः ॥९४॥

विदूइति। भोदीत्यादि। भवति सागरिके कस्माद्विश्रब्धाभूत्वा प्रियवयस्यं नालपसि अद्यापि तस्या नित्यरुष्टायादेव्या वासवदत्ताया दुर्वचनैः कटूकृतानि श्रोत्राणि साम्प्रतं सुखयतु तव मधुरवचनोप-न्यासः। दुर्व्वचनैः कटुवाक्यैः। कटूकृतानीति। कटुवस्तुसमास्वादा-न्मुखं यथा कटु भवति तद्वदिति भावः ॥९५॥

वासेति। हञ्जे इत्यादि। अयि काञ्चनमाले अहमीदृशी कटु-भाषिणी आर्य्यवसन्तकः खलु प्रियंवदः। प्रियं मधुरं वदतीति प्रियं वदः। प्रियवशादिति खः। तस्य खित्त्वात् प्रियशब्दस्य मन् ॥९६॥

काञ्चेति। हदेत्यादि। हताश स्मरिष्यसि इदं वचनम् ॥९७॥

विदू। (विलोक्य॥) भो वअस्स पेक्ख पक्ख एसो क्खु कुविदकामिणीकवोलसच्छिहो पुव्वदिसं पआसअंतो उ-दिदो भअवं मिअलञ्छणो। ९८

राजा। (निरूप्य सस्पृहम्। प्रिये पश्य पश्य। ९९

त्वद्वदनाहृतकान्तिसर्व्वस्वःआरुह्य शैलशिखरम्।

प्रतिकर्त्तुमिवोर्द्धकरः स्थितः पुरस्तान्निशानाथः॥ १००

ननु प्रिये किन्न दर्शितमनेनोद्गच्छता जडत्वं। कुतः॥ १०१

---

विदूइति। भोइत्यादि। भोवयस्य प्रेक्षस्व प्रेक्षस्व एष खलु कुपित कामिनीकपोलसन्निभः पूर्व्वदिशं प्रकाशयन् उदितोभगवान् मृगलाञ्छनः कुपितायाः क्रुद्धायाः कामिन्याः कपोलसन्निभोगण्डसदृशः। आताम्र इतियावत्॥ ९८॥

राजेति। निरूप्य सस्पृहमवलोक्य॥ ९९॥

आरुह्येति। त्वद्वदनेन अपहृतं कान्तिसर्व्वस्वं शोभासम्पत्तिर्यस्य स तथोक्तो निशानाथश्चन्द्रमाः प्रतिकर्त्तुमिव शैलशिखरं पर्व्वतशृङ्ग-मारुह्य ऊर्द्धकर उत्क्षिप्तकिरणः उद्वाहुर्वा सन् पुरस्तादग्रे स्थितः पश्य पश्य इतिपूर्व्वेणान्वयः। बलिहस्तांशवः करा इत्यमरः। एतेन वैरिप्रतीकाराय उद्बाहुः सन्तपश्चरतीति गम्यते। त्वद्वदनापहृतेत्यादि पदार्थस्य प्रतीकारायोद्बाहुभावेन स्थितौ हेतुत्वात् काव्यलिङ्गमलङ्कारः प्रतिकर्त्तुमिवेत्युत्प्रेक्षा। ऊर्द्धकर इति श्लिष्टम्। हेतोर्वाक्यपदार्थ-त्वेकाव्यलिङ्गं निगद्यते इति॥ १००॥

नन्विति। ननुः सम्बोधने। उद्गच्छता उदयमानेन अनेन चन्द्रमसा किं जडत्वमज्ञत्वं नदर्शितम् अपितु दर्शितमेव हिमयुक्तत्वेन व-स्तुतो जडत्वात्। जडाः स्त्रियाम्। मूकशिशिरौ हिमयुक्तमूकाप्रज्ञ पुंसुत्विष्विति मेदिनी॥ १०१॥

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तवाप्यस्त्येव बिम्बाधरे ॥१०२

वास। (सरोषमवगुण्ठनमपनीय।) अज्जउत्त सच्चं एव्व अहं साअरिआ तुमं उण साअरिओक्खित्तहिअओ सव्वं एव्व साअरिआमअं पेक्खसि ॥१०३

राजा। (दृष्ट्वा सवैलक्ष्यम् अपवार्य्य।) हा धिक्कष्टं कथं देवी वासवदत्ता वयस्य किमेतत् ॥१०४

---

कृतद्वत्यनेनाकाङ्क्षितं हेतुमाह किमिति। तव वक्त्रेन्दश्चन्द्रवत् किं पद्मस्य रुचिं शोभां न हन्ति नाशयति नाशयत्येव। रुचिर्मयूखेशोभायामभिष्वङ्गाभिलाषयोरिति विश्वः। किं नयनानन्दं लोकानां नयनप्रीतिं न विधत्ते जनयति जनयत्येव। आलोकमात्रेण दर्शनमात्रेण झषो मीनः केतनं ध्वजो यस्य स तस्य कन्दर्पस्य वा वृद्धिं मुद्दीप्तिं न करोति करोत्येव। पृथुरोमाझषो मत्स्योमीन इति प्रद्युम्नो मीनकेतनः कन्दर्प इति चामरः। अमृतेन सुधया चेद्यदि दर्पश्चन्द्रस्याहङ्कारस्तदपि अमृतमपि इह अस्मिन् तव बिम्बाधरे बिम्बिकाफलवदधरे अस्त्येव एवञ्च सति तव वक्त्रेन्दौ वदनचन्द्रे सति विद्यमाने यत् यस्मात् अयमपरः शीतांशुरिन्दुरुज्जृम्भते उदेति अतो आग्रहत्वं दर्शितमेव। निष्फल प्रयत्नत्वादितिभावः ॥१०२॥

वासेति। अपनीय अपसार्य्य। अज्जेत्यादि। आर्य्यपुत्र सत्यमेव अहं सागरिका त्वं पुनः सागरिकोत्क्षिप्तहृदयः सर्व्वमेव सागरिकामयं प्रेक्षसे। सागरिकया उत्क्षिप्तं गृहीतं हृदयं यस्य स तथोक्तः॥ १०३॥

राजेति। सवैलक्ष्यं सविस्मयम्। विलक्षो विस्मयान्वित इत्यमरः ॥१०४॥

विदू। (सविषादम्।) भो वअस्स किं अवरं अह्माणं जीविदसंसओ जादो एसो ॥[१०५]

राजा। (उपविश्य अञ्जलिं बद्धा।) प्रिये वासवदत्ते प्रसीद प्रसीद ॥[१०६]

वास। (तदभिमुखमश्रूणि निपातयन्ती।) अज्जउत्त मा एव्वं भण अण्णगदाइं एदाइं अक्खराइं ॥[१०७]

विदू। (आत्मगतम्।) किं दाणिं एत्थ विरअइस्सं भोदु एव्वं दाव।[१०८]

(प्रकाशम्।) भोदि महाणुभावा क्खु तुमं ता क्खमीअदु दाव एक्को अवराहो पिअवअस्सस्स ॥[१०९]

वास। अज्ज वसन्तअ णं पढ़मसङ्गमे विग्घं करन्तीए मए ज्जेव्व एदस्स अवरद्धं ण अज्जउत्तेण॥[११०]

---

विदू इति। भो इत्यादि। भो वयस्य किमपरम् अस्माकं जीवित संशयो जात एषः। किमेतदित्यस्योत्तरमाह किमपरमिति। अपरं किमपि न एषोऽस्माकं जीवितसंशयो जात इत्यर्थः ॥१०५॥

राजेति। प्रसीद प्रसन्नाभव ॥१०६॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र मा एवं भण अन्यगतानि एतानि अक्षराणि। अन्यगतानि सागरिकाविषयकाणि तस्यामेव योग्यानीति यावत्। एतानि प्रसादनार्थानि। अक्षराणि वर्णाः ॥१०७॥

विदू इति। किमित्यादि। किमिदानीमत्र विरचयिष्यामि भवतु एवं तावत्। विरचयिष्यामि वक्ष्यामि। वक्ष्यमाणं मनसि कृत्वाह भवत्विति ॥१०८॥

प्रकाश मिति। भोदीत्यादि। भवति महानुभावा खलु त्वं तत् क्षम्यतां तावदेकोऽपराधः प्रियवयस्यस्य। महानुभावा सदाशया ॥१०९॥

राजा। एवं प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि तथापि विज्ञापयामि ॥१११

आताम्रतामपनयामि विलक्ष एष
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना।
कोपोपरागजनितान्तु मुखेन्दुविम्बे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥११२

(इति पादयोः पतति।)११३

---

वासेति। अज्जेत्यादि। आर्य्यवसन्तक ननु प्रथमसङ्गमे विघ्नं कुर्व्वत्या मयैव एतस्यापराद्धं न आर्य्यपुत्रेण। अपराद्धम् अपराधः कृतः ॥११०॥

राजेति। प्रत्यक्षदृष्टं व्यलीकमकार्य्यं यस्य स तथोक्तो अहम्। व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि पीडने इति मेदिनी ॥१११॥

आताम्रेति। हे देवि एष विलक्षो विस्मयाकुलो अहं तव चरणयोः पादयोर्लाक्षाकृताम् अलक्तकेनोत्पादिताम् आताम्रतामरुणतां मूर्ध्ना मस्तकेन अपनयामि नाशयामि। विलज्ज इति पाठेतु लज्जा रहित इत्यर्थः। मुखेन्दुविम्बे मुखचन्द्रमण्डले कोपेन क्रोधेन उपजनितामुत्पादिता माताम्रतान्तु परं तदनन्तरं हर्त्तुं नाशयितुं क्षमः शक्तोऽस्मि यदि मयि करुणा कृपास्यात्। सत्यां करुणायामाताम्रता वश्यमपयास्यतीतिभावः। आताम्रं विशदारुणमिति धनञ्जयः ॥११२॥

इतीति। उक्तातिशेषः। पादपतनं कुपितकामिनीमानभञ्जनोपायविशेषः। यदाह दशरूपके। यथोत्तरं गुरुः षड्भिरुपायैस्तमुपाचरेत्। साम्नाभेदेन दानेन नत्युपेक्षा रसान्तरैः। तत्र प्रियवचः साम भेदस्तत् सख्युपार्ज्जनम्। दानं व्याजेन भूषादेः पादयोः पतनं नतिरिति ॥११३॥

वास। (हस्तेन वारयन्ती।) अज्ज उत्त उट्ठेहि उट्ठेहि णिल्लज्जो क्खु सो जणो जो अज्जउत्तस्स ईदिसं हिअअं जाणिअ पुणो बि कुप्पदि ता सुहं चिट्ठदु अज्जउत्तो अहं गमिस्सं। (इति गन्तुमिच्छति)॥११४

काञ्च। भट्टिणि करेहि पसादं एवं चरणपडिअं महाराअं उज्झिअ गदाए अवस्सं पच्चादावेण होदव्वं॥११५

वास॥ अवेहि अपण्डिदे किं एत्थ पच्चादावस्स कारणं ता एहि गच्छम्ह।(इति निष्क्रान्ते॥)११६

राजा। देवि प्रसीद प्रसीद। (आतान्ततामपनया-मीति पुनः पठति॥)११७

विदू। भो उट्ठेहि गदा सा वासवदत्ता देवी ता कीस एत्थ अरस्सरुदिदं करेसि॥११८

---

वासेति। अज्जेत्यादि। आर्य्यपुत्र उत्तिष्ठ उत्तिष्ठ निर्लज्जः खलु सजनः य आर्य्यपुत्रस्य ईदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति तत्सुखं तिष्ठतु आर्य्यपुत्र अहं गमिष्यामि। ईदृशमतिप्रयेनान्यसंक्रान्तम्॥११४॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि कुरु प्रसादम् एवं चरणपतितं महाराजमुज्झित्वा गताया अवश्यं पश्चात्तापेन भवितव्यम्। उज्झि-त्वात्यक्त्वा। भवितव्यमिति भावेतव्यः॥११५॥

वासेति। अवेहीत्यादि। अपेहि अपण्डिते किमत्र पश्चात्तापस्य कारणं तदेहि गच्छामः। अपण्डिते अज्ञे॥११६॥

राजेति। नमिताग्निरस्त्वात् गतामपि देवीमत्रस्थामनुभूयाह प्रसीदेति॥११७॥

विदू इति। भो इत्यादि। भो उत्तिष्ठ गतासा वासवदत्ता देवी

राजा। (मुखमुन्नमय्य)। कथमकृत्वैव प्रसादं गता देवी॥ ११९

विदू। न किदो कहं प्रसादो जं अज्जवि अक्खदस-रीरा चिट्ठह्म॥ १२०

राजा। धिङ्मूर्ख किमेवमुपहससि मां ननु त्वत्कृत एव अयमापतितोऽस्माकमनर्थक्रमः॥ कुतः १२१

समारूढा प्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्व्वं खलु मया।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति॥ १२२

---

तत्कस्मात् अत्र अरण्यरुदितं करोषि। अरण्यरुदितमलक्ष्यदुःख निवेदनम्॥११८॥

राजेति। उन्नमय्य उत्तोल्य। जेर्घो रय इति जेरयः॥११९॥

विदूइति। गोत्यादि। नकृतः कथं प्रसादः यदद्यापि अक्षत शरीरास्तिष्ठामः। यद्वयमनया नाहता सएवास्याः प्रसाद इति भावः॥१२०॥

राजेति। किं कथम्। ननु यतः। त्वत् कृतस्त्वयाजनित एव अस्माकमयमनर्थक्रमो अनिष्टपरम्परा उत्तरोत्तरमनिष्टमिति यावत् आपतित उपस्थितः। उत्तरानिष्टं दर्शयितुमाह कुतइति॥१२१॥

समेति। अनुदिनं प्रतिदिनं प्रणयस्य प्रेम्णो बहुमानात् समादर-णात् प्रीतिः समारूढा सम्यक्जाता अद्य खलु मया कृतम् अकृतपूर्व्वम् अकृतम् अकरणं जातं पूर्व्वस्मिन् यस्य तत् तथोक्तं कदाचिदपि प्रागकृतमिति यावत् इदं व्यलीकम् अकार्य्यं वीक्ष्य दृष्ट्वा असहना असहिष्णु, रसौ प्रियास्फुटं व्यक्तं जीवितं मुञ्चति त्यजति। भविष्यत् सामीप्ये वर्त्तमानवत् व्यवहारः। अर्थान्तरं न्यस्यति

विदू। भो रुट्ठा देवी दाव ण जाणीअदि किं करिस्सदि त्ति साअरिआए उण जीविदं दुक्करं त्ति तक्केमि॥[१२३]

राजा। वयस्य अहमप्येवं चिन्तयामि हा प्रिये सागरिके॥[१२४]

(ततः प्रविशति वासवदत्तावेशधारिणी सागरिका)।[१२५]

साग। (सोद्वेगम्।) दिट्ठिआ इमिणा बिरइदेण देवीबेसेण इमादो सङ्गीदसालादो णिक्कमन्ती ण केणावि लक्खिदम्हि ता दाणिं एत्थ किं करिस्सं। (इति सास्रं चिन्तयति।)[१२६]

---

हि यस्मात् प्रकृष्टस्य प्रेम्नः प्रीतेस्खलितं च्युतिरविषह्यमसह्यं भवति। अत्र सामान्येन विशेष समर्थनादर्थान्तरन्यासोऽलङ्कारः। उक्तं काव्यप्रकाशे। सामान्यं वा विशेषेण तदन्येन समर्थ्यते। यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा इति॥१२२॥

विदू इति। भो इत्यादि। भो रुष्टा देवी तावन्न ज्ञायते किं करिष्यतीति सागरिकायाः पुनर्ज्जीवितं दुष्करमिति तर्कयामि॥१२३॥

राजेति। एवं भवदुक्तप्रकारम्॥१२४॥

तत इति। सुगमम्॥१२५॥

सागेति। दिट्ठीत्यादि। दिष्ट्या अनेन विरचितेन देवीवेशेन अस्याः सङ्गीतशालातो निष्क्रामन्ती न केनापि लक्षितास्मि तदिदानीमत्र किं करिष्यामि। अत्रेदं बोध्यम्। चरणपतितं महाराजमवज्ञाय सकोपं प्रतिगच्छन्तीं वासवदत्तामध्यन्यवलोक्य माधवीलतामण्डपं यान्त्यौ सागरिकासुसङ्गते भीत्वा एकैकस्यां दिशि पलायाञ्चक्राते तेन सागरिका सङ्गीतशालाभ्यन्तरं प्रविवेश अनन्तरं ततो गतायां सहकासुनमाज्ञया वासवदत्तायां सङ्गीतशालातो निष्क्रामन्ती एकाकिनी सो-

विदू । भो किं मूढो विअ चिट्ठसि चिन्तेहि एत्थ पड़िआरं । १२७

राजा । वयस्य तदेव चिन्तयामि देवीप्रसादं मुक्त्वा नान्यमुपायं पश्यामि तदेहि तत्रैव गच्छावः ॥ (इति परिक्रामतः ।) १२८

साग । (सास्त्रं विमृश्य ।) वरं दाणिं सअं ज्जेव्व अत्ताणअं उब्बन्धिअ उवरदा भविस्सं ण उण जाणिदसङ्केतवुत्तन्ता सुसंगदा विअ देवीए परिभूदा चिट्ठिह्मि ता जाव अहं असोअपादवदले गदुअ जधासमोहिदं करिस्सं । (इति परिक्रामति ॥) १२९

---

इत्यं दिष्ट्येत्यादिकमाह । दिष्ट्या चानन्दे । लक्षिता दृष्टा । केनचिदृष्टत्वादानन्दः । देव्या भावदृष्ट्या वाक्यश्रवणेन च सङ्केतवृत्तान्तस्य तद्विदितता व्यक्तेः किं कर्त्तव्यताविमूढतयाह तदिदानीमिति । तत् तस्मात् सङ्केतवृत्तान्तस्य देवीगोचरत्वादित्यर्थः । चिन्तयति कर्त्तव्यतामवधारयति ॥१२६॥

विदू इति । भो इत्यादि । भोः किं मूढइव तिष्ठसि चिन्तयाम प्रतीकारम् । मूढइव अप्रज्ञइव ॥१२७॥

राजेति । मुक्त्वा वर्ज्जयित्वा । तत्रैव देवीसमीपएव ॥१२८॥

सानेति । सास्त्रम् अस्त्रेणाश्रुणा सहितम् । विमृश्य वितर्क्य । वितर्कः स्यादूहनयनं परामर्शो विमर्शनम् । अध्याहारस्तर्कऊह इति हेमचन्द्रः । वरमित्यादि । वरमिदानीं स्वयमेवात्मानमुद्बध्य उपरता भविष्यामि नपुनर्ज्ञातसङ्केतवृत्तान्तया सुसङ्गतेव देव्या परिभूता तिष्ठामि तत् यावदहमशोकपादपतले गत्वा यथासमीहितं करिष्यामि । वरमल्पमिष्टम् । मनागिष्टेवरं क्लीवं केचिदाहु स्तदव्ययमिति मेदिनी ।

विदू। (आकर्ण्य।) चिट्ठ दाव चिट्ठ भो पदसद्दो सुणीअदि जाणामि कदावि गहिदपच्चादावा पुणो वि देवी आअदा भवे ॥ १२०

राजा। वयस्य महानुभावा खलु देवी कदाचिदेवमपि स्यात् तत्त्वरितं निरूपय ॥ १२१

विदू। जं भवं आणवेदि। (इति निष्क्रामति ॥ )१२२

साग। (उपसृत्य।) ता जाव इमाए माहवीलदाए पासं विरइअ असोअपादवे अप्पाणअं उव्वन्धिअ वावाद-इस्सं। (इति लतापाशं रचयन्ती।) हा ताद हा अम्ब एसा दाणिं अहं अणाधा असरणा विवज्जामि मन्दभा-इणी। (इति कण्ठे लतापाशमर्पयति ॥ )१२३

---

उपरता मृता। नपुनर्नेत्व। ज्ञातः सङ्केतवृत्तान्तः सङ्केतवार्त्ता यया सा तयोक्तया देव्येत्यस्य विशेषणम्। सुसङ्गतेनेति। देव्या सङ्केतवृत्तान्त ज्ञानान्मदत् सुसङ्गत यात्व वश्यमनादृतयाभवितव्यं तज्ज्ञानाभिजात्या-त्तया सोढव्यं न पुनरभि जातया मयेतिभावः। परिभूता अनादृता। अनादरः परिभव इत्यमरः। यथा समीहितं यथा अभिलषितम् ॥१२९॥

विदू इति। चिट्ठेत्यादि। तिष्ठ तावत् तिष्ठ भोः पदशब्दः श्रूयते जानामि कदापि गृहीतपश्चात्तापा पुनरपि देवी आगता भवेत्। जानामि अनुभवामि ॥१२०॥

राजेति। महानुभावा सदाशया। कदाचित् सम्भावना द्योतने ॥१२१॥

विदूइति। जमित्यादि। यद्भवानाज्ञापयति ॥१२२॥

सागेति। उपसृत्य अशोकपादपमुपगम्य। तेत्यादि। तद्‌या-वदनया माधवीलतया पाशं विरचय्य अशोकपादपे आत्मानमुद्बध्य

विदू। (विलोक्य।) का उण एस कहं देवी वासवदत्ता॥[१२४]

(ससंभ्रममुच्चैः।) भो वअस्स परित्ताहि परित्ताहि एसा क्खु देवी वासवदत्ता अप्पाणअं उब्बन्धिअ वावादेदि॥[१२५]

राजा। (ससंभ्रममुपसृत्य।) वयस्य क्वासौ क्वासौ॥[१२६]

विदू। णं एसा॥[१२७]

राजा। (कण्ठात्पाशमपनयन्।) अयि साहसकारिणि किमिदमकार्य्यं क्रियते॥[१२८]

---

व्यापादयिष्यामि। विरचय्य निर्म्माय। व्यापादयिष्यामि हनिष्यामि। हेत्यादि। हा तात हा अम्ब एषेदानीमहमनाथा अशरणा विपद्ये मन्दभागिनी। नास्ति शरणं रक्षिता यस्याः सा। विपद्ये म्रिये। मन्दभागो निकृष्टभाग्यमस्या अस्तीति मन्दभागिनी। भागोऽस्त्री रूपार्द्धके भाग्यैकदेशयोरिति मेदिनी॥१२३

विदू इति। केत्यादि। का पुनरेषा कथं देवी वासवदत्ता॥१२४॥

ससम्भ्रममिति। भो इत्यादि। भो वयस्य परित्रायस्व परित्रायस्व एषा खलु देवी वासवदत्ता आत्मानमुद्बध्य व्यापादयति॥१२५॥

राजेति। क्व कुत्र। असौ वासवदत्ता॥१२६॥

विदू इति। णं एसा नन्वेषा॥१२७॥

राजेति। अपनयन् अपसारयन्। साहसमात्मघातं कर्त्तुं शीलं यस्याः सा। सहसा अविमृश्य क्रियमाणं कर्म्म साहसं बलात्कारकृतकार्य्यमात्मघातादि। साहसन्तु बलात्कारकृतकार्य्येमदेऽपि चेति विश्वः। अकार्य्यमसत्कार्य्यम्॥१२८॥

ममेति। हे प्रिये पाशे तव कण्ठस्थिते सति मम प्राणाः कण्ठगता निर्गमोन्मुखा इति यावत् अतः साहसात्मकोऽयं स्वार्थप्रयत्नः स्वोद्देशेन

मम कण्ठगताः प्राणाः पाशे कण्ठस्थिते तव ।
अतः स्वार्थप्रयत्नोऽयं त्यज्यतां साहसं प्रिये ॥[१३९]

साग० । (राजानं दृष्ट्वा ।) अह्मो कधं एसो भट्टा ।[१४०]

(सहर्षमात्मगतम् ।) जं सच्चं एणं पेक्खिअ पुणो वि मे जीविदाहिलासो संवुत्तो अधवा एणं पेक्खिअ कदत्थ भविअ सुहेण अप्पाणअं उब्बन्धिअ जीविदं परिच्चइस्सं ॥[१४१]

(प्रकाशम् ।) मुञ्चदु मुञ्चदु मं भट्टा पराहीणो क्खु अअं जणो ण उण ईदिसं अवसरं मरिदुं पावेदि तुमं पि देवीए मा अप्पाणं अवराहिणं करेसि ॥ (इति पुनः कण्ठे पाशं दातुमिच्छति ॥)[१४२]

राजा । (निरूप्य सहर्षम् ॥) कथं प्रिया मे सागरिका । (इति कण्ठात्पाशमाक्षिप्य । )[१४३]

---

क्रियमाणो व्यापारस्त्यज्यताम् । यस्मादात्मोद्देशेन क्रियमाणेऽप्येतस्मिन् व्यापारे अनुद्दिश्यस्यापि मत्कृत प्राणवियोगरूपफलस्याश्यभाव- त्तस्मादयं त्यज्यतामिति भावः । परानिष्टकृत् स्वार्थोऽपि हातव्यः । यदुक्तम् । तेते मानुष राक्षसाः परहितं यैः स्वार्थतो हन्यतइति ॥१३९॥

सागेति । अह्मो इत्यादि । अहो कथमेष भर्त्ता ॥१४०॥

सहर्षमिति । जमित्यादि । यत् सत्यमेनं प्रेक्ष्य पुनरपि मे जीवि- ताभिलाषः संवृत्तः । अथवा एनं प्रेक्ष्य कृतार्थीभूत्वा सुखेनात्मानमुद्बध्य जीवितं परित्यक्ष्यामि ॥१४१॥

प्रकाशमिति । मुञ्चदु इत्यादि । मुञ्चतु मुञ्चतु मां भर्त्ता पराधीनः खल्वयं जनः न पुनरीदृशमवसरं मर्त्तुं प्राप्नोति त्वमपि देव्या मा आत्मान मपराधीनं कुरु ॥१४२॥

राजेति । निरूप्य विशेषेणावधार्य्य ॥१४३॥

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेनम्।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि॥१४४

(इति बाहुपाशमाक्षिप्य कण्ठे गृहीत्वा स्पर्शसुखमभिनीय विदूषकं प्रति॥) सखे इवसनभ्रा वृष्टिः॥१४५

विदू। भो एव्वं णेदं जइ अआलवादावली भविअ ण आआदि देवी वासवदत्ता॥१४६

(ततः प्रविशति वासवदत्ता काञ्चनमाला च॥)१४७

वास। हञ्जे काञ्चणमाले तं तहाचरणणिवडिदं

---

अलमिति। अयि जीवितेशे जीवितेश्वरि ते तव अमुना साहसेन आत्मघातेन अतिमात्रमलमलं तदतिशयेन वारणीयमित्यर्थः। त्वमेनं लतापाशं त्वरितं शीघ्रं विमुञ्च त्यज चलितं प्रयातुं कृतारम्भमपि जीवितं मम जीवनं निरोद्धुं निवारयितुम् इह मम कण्ठे बाहुपाशं भुजपाशं क्षणं निधेहि अर्पय॥१४४॥

इतीति। आक्षिप्य आकृष्य। नास्ति अभ्रं मेघाडम्बरो यस्यां सा अनभ्रा। इदानीं प्रिया समागमः पूर्व्वसूचनामन्तरेण जात इत्याशयः। सन्तापनिवारकत्वादुभयोः सौसादृश्यम्॥१४५॥

विदू इति। भो इत्यादि। भो एवमिदं यद्यकालवातावलीभूत्वा न आयाति देवी वासवदत्ता। अकालवातावली आकालिक झटिका। यया वृष्टिर्निवार्य्यते इति॥१४६॥

तत इति। सुगमम्॥१४७॥

वासेति। हञ्जे इत्यादि। अयि काञ्चनमाले तं तथा चरणपतितमार्य्यपुत्रमवधीरयित्वा आगच्छन्त्या मया अति निष्ठुरं कृतं तदिदानीं

अज्जउत्तं अवधीरिअ आअच्छन्तीए मए अदिणिट्ठुरं किदं ता दाणिं सअं ज्जेव्व गदुअ अज्जउत्तं अणुणइस्सं ॥१४८

काञ्च। को अण्णो देवीं वज्जिअ एव्वं भणिदुं जाणादि वरं सो एव्व देवो दुज्जणो होदु ण उण देवी ता एदु एदु देवी॥ (इति परिक्रामतः।)१४९

राजा। अयि मुग्धे किमद्यापि मध्यस्थतया वयं विफलमनोरथाः क्रियामहे ॥१५०

काञ्च।(कर्णं दत्त्वा॥) भट्टिणि जह समीवे एसो भट्टा मन्तेदि तह तक्केमि तुमं ज्जेव्व अणुणेदुं आअच्छदि ता उवसप्पदु भट्टिणी॥१५१

वास। (सहर्षम्।) ता अलक्खिदा एव्व पुट्ठदो गदुअ कण्ठे गेह्णिअ पसादइस्सं ॥१५२

---

स्वयमेव गत्वा आर्य्यपुत्रमनुनेष्यामि। अधीरयित्वा अवज्ञाय। अति निष्ठुरं निर्दयम्। अनुनेष्यामि प्रसादयिष्यामि ॥१४८॥

काञ्चेति। को इत्यादि। कोऽन्यो देवीं वर्ज्जयित्वा एवं भणितुं जानाति वरं स एव देवो दुर्ज्जनो भवतु न पुनर्देवो तदेतु एतु देवी। देवीं वर्ज्जयित्वा देवीमन्तरेण ॥१४९॥

राजेति। अद्यापि अधुनापि। मध्यस्थतया औदासीन्येन ॥१५०॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि यथा समीपे भर्त्ता मन्त्रयते तथा तर्कयामि त्वामेवानुनेतुमागच्छति तदुपसर्पतु भर्त्री। मन्त्रयते अस्पष्टं व्याहरति ॥१५१॥

वासेति। तेत्यादि। तदलक्षितैव पृष्ठतो गत्वा कण्ठे गृहीत्वा प्रसादयिष्यामि। पृष्ठतः पश्चात् ॥१५२॥

विदू। भोदि साअरिए वीसद्धा भविअ पिअवअस्सं आलावेहि ॥१५३

वास। (आकर्ण्य सविषादम्।) कञ्चणमाले कधं सा साअरिआ वि एत्थ एव्व चिट्ठदि ता सुणम्ह ताव पच्छा उपसप्पिस्सं। (इति तथा करोति॥)१५४

साग। भट्टा किं एदिणा अलीअदाक्खिण्णेण जीविदादो वि अधिअबल्लहाए देवीए पुणो वि अत्ताणअं किं करेसि॥१५५

राजा। अयि मिथ्यावादिनी खल्वसि॥१५६

कुतः

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि तथा यातं मया पादयोः।

---

विदू इति। भोदीत्यादि। भवति सागरिके विस्रब्धाभूत्वा प्रियवयस्यमालप। विस्रब्धा विश्वासवती। समौ विस्रम्भ विश्वासावित्यमरः॥१५३

वासेति। कञ्चेत्यादि। काञ्चनमाले कथं सा सागरिकाप्यत्रैव तिष्ठति तत् शृणोमि तावत् पश्चादुपसर्प्स्यामि॥१५४॥

सागेति। भट्टेत्यादि। भर्त्तः किमेतेनालीकदाक्षिण्येन जीवितादप्यधिकवल्लभाया देव्याः पुनरप्यात्मानमपराधिनं किं करोषि। अलीकदाक्षिण्येन अकृतेन दाक्षिण्येन सर्वत्रसमरागिता प्रदर्शनेन। उक्तं दर्पणे। एषु त्वनेक महिला समरागो दक्षिणः कथित इति। अधिकवल्लभाया अधिकप्रियायाः। दयितं वल्लभं प्रियमित्यमरः। किं करोषि॥१५५॥

राजेति। मिथ्यावादिनी जीवितदप्यधिकवल्लभाया देव्या इति वचनं मिथ्येत्यर्थः॥१५६॥

वासेति। अस्या देव्याः कुचयुगे स्तनयुगले श्वासेन दीर्घश्वासेन

इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं

प्रेमाबन्धविवर्द्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥१५७

वास। (उपसृत्य सरोषम्।) अज्जउत्त सरिसं एदं ॥१५८

राजा। (दृष्ट्वा सवैलक्ष्यम्।) देवि न खल्वकारणे मा-सुपालब्धुमर्हसि। त्वामेव मत्वा वेशसादृश्याद्विप्रलब्धा वयमिहागताः। तत् क्षम्यतामिति। (पादयोः पतति।१५९

वास। (सरोषम्।) अज्जउत्त उट्ठेहि उट्ठेहि किं अज्ज

---

उत्कम्पिनि कम्पमाने सति मया कम्पितम् अस्या मौने तूष्णीम्भावे मया प्रियं सविनयं भाषितं तथा अस्या वक्त्रे वदने कुटिलीकृते वक्रीकृते भ्रुवौ यस्मिन् तत् तथोक्ते सति मया पादयोर्यातं पतितम्। क्लीवेख इति भूषणस्य ह्रस्वः ततोगुन। इत्थमिदम्प्रकारेण देव्याः सम्बन्धे नो अस्माकं परं केवलं सहजात् स्वभावतो यदाभिजात्यमौचित्यं तेन जनिता तदनुरुद्धा सेवैव अस्ति इति शेषः। अभिजातः कुलीने स्यात् न्याय्यपण्डितयोस्त्रिष्विति मेदिनी। प्रेम्णः प्रणयस्य आबन्धेन दृढ़बन्धेन विवर्द्धितः विशेषेण वृद्धिं नीतः अतएव अधिको अतिरिक्तो रसोऽनुरागो यस्यां सा तथोक्ता यातु प्रीतिः सन्तोषः सा त्वयि त्वद्विषये विद्यत इति शेषः। शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः ॥१५७॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र सदृशमिदम्। इदं सागरिकानुवर्त्तनं सदृशं त्वदुपयुक्तम् ॥१५८॥

राजेति। सवैलक्ष्यं सविस्मयम्। अकारणे उपालम्भकारणं विना उपलब्धुं दुर्व्वक्तुम्। दुर्व्वादः स्यादुपालम्भ इति जटाधरः। त्वामेवेति। वेशसादृश्यादियं त्वमेव इत्यनुभूयेत्यर्थः। विप्रलब्धाः प्रतारिताः ॥१५९॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र उत्तिष्ठ उत्तिष्ठ किमद्यापि

वि सहजाभिजादाए सेवाए दुःखं अणुभवीअदि ॥१६०

राजा। (स्वगतम्।) किमेतदपि श्रुतं देव्या तत्सर्वथा देवीप्रसादनोपायं प्रति निराशीभूताः स्मः। (इत्यधोमुखस्तिष्ठति।)१६१

विदू। भोदि तुमं किल अत्ताणअं उब्बन्धिअ वावादेसि त्ति वेससारिस्समोहिदेण मए पिअवअस्सो एत्थ आणीदो जइ मम वअणं ण पत्तिआअसि ता पेक्ख इमं लदापासं। (इति लतापाशं दर्शयति॥)१६२

वास। (सकोपम्।) हञ्जे कञ्चणमाले एदेण एव्व लदापासेण बन्धिअ गेह्न एदं बह्मणं दुव्विणीदकस्सआं अ अग्गदो करेहि ॥१६३

---

सहजाभिजातया सेवया दुःखमनुभूयते। किं कथम्। अद्यापि अधुनापि। सहजाभिजातया स्वभावादुचितया ॥१६०॥

राजेति। एतत् श्वासोत्कम्पिनीत्यादि वाक्यम्। निर्नास्ति आशा अभिलाषो येषां ते। अनिराशा निराशाभूता इति च्विः। इतः पूर्वं साभिलाषा आस्मेति भावः ॥१६१॥

विदू इति। भोदीत्यादि। भवति त्वं किल आत्मानमुद्बध्य व्यापादयसीति वेशसादृश्येन मोहितेन मया प्रियवयस्योऽत्रानीतः यदि मम वचनं न प्रत्येषि तत्प्रेक्षस्व इमं लतापाशम्। मोहितेन जनितभ्रमेण ॥१६२॥

वासेति। हञ्जे इत्यादि। अयि काञ्चनमाले एतेनैव लतापाशेन बद्धा गृहाणैनं ब्राह्मणं दुर्विनीतकन्यकाञ्च अग्रतः कुरु। दुर्विनीतकन्यकां दुष्टकन्यां सागरिकाम् ॥१६३॥

काञ्च । जं देवी आणवेदि त्ति ॥ (लतापाशेन वसन्तकं गले बध्वा ताडयति ॥१६४

हदास अणुभव दाव अत्तणो अविणअस्स फलं देवीए दुव्वअणेण कडु इदाइं सोत्ताइं त्ति सुमरेहि तं वअणं । साअरिए तुमं पि अग्गदो होहि ॥१६५

साग । (स्वगतम् ।) अकिदपुखाए मए मरिदुं वि अत्तणो इच्छाए ण पारिदं ॥१६६

विदू । (सविषादम् ।) भो वअस्स सुमरेहि मं अणाधं देवीए बन्धणादो विवज्जन्तं । (इतिराजानमालोकयति॥ १६७

(वासवदत्ता राजानमालोकयन्तीं सागरिकां वसन्तकं च गृहीत्वा काञ्चनमालया सह निष्क्रान्ता ॥१६८

राजा । सखेदम् । कष्टं भोः कष्टम् ॥१६९

---

काञ्चेति । जमित्यादि । यद्देवी आज्ञापयति ॥१६४॥

हदेत्यादि । हताश अनुभव तावदात्मनोऽविनयस्य फलं देव्या दुर्व्वचनेन कटूकृतानि श्रोत्राणीति स्मर तद्वचनम् । सागरिके त्वमपि अग्रतोभव । अविनयस्य असदाचरणस्य ॥१६५॥

सागेति । अकिदेत्यादि । अकृतपुण्यया मया मर्त्तुमपि आत्मन इच्छया न पारितम् । पारितं शक्तम् ॥१६६॥

विदू इति । भो इत्यादि । भो वयस्य स्मर मामनाथं देव्या बन्धनात् विपद्यमानम् । विपद्यमानं म्रियमाणम् ॥१६७॥

वासेति । सुगमम् ॥१६८॥

राजेति । सुगमम् ॥१६९॥

किं देव्याः कृतदीर्घरोषमुषितस्निग्धस्मितं तन्मुखं
तस्यां सागरिकां सुसम्भृतरुषा सन्तर्ज्यमानां तया ।
बद्धा नीतमितो वसन्तकमहं किं चिन्तयामीत्यहो
सर्व्वाकारकृतव्ययः क्षणमपि प्राप्नोमि नो निर्वृतिम् ॥ ७०

तत् किमिदानीमिह स्थितेन प्रयोजनं देवीमेव प्रसा-
दयितुमभ्यन्तरं प्रविशामि । ७२

(इति निष्क्रान्ताः सर्वे ।) ७२

इति सङ्केतो नाम तृतीयोऽङ्कः ॥ ७२

---

किमिति । किं देव्या वासवदत्तायाः कृतेन दीर्घेण बहुकालस्था-यिना रोषेण क्रोधेनमुषितं हृतं स्निग्धस्मितं स्नेहवदीषद्धसितं यस्मिन् तत् तथोक्तं तत् इष्टं मुखं चिन्तयामि । किं सुसम्भृतरुषा प्राप्तक्रोधया । क्रमोद्धतरुषेति पाठे क्रमेण उद्धता प्रवृद्धारूढ़ कोपो यस्या सा तथोक्तया तया देव्या सन्तर्ज्यमानां भर्त्सयमानां तस्यां भीतां सागरिकां चिन्तयामि । किं बद्धा इतो अस्मात् प्रदेशात् नीतं स्थानान्तरं प्रापितं वसन्तकं चिन्तयामि । सर्वेषां देवी सुखसागरिकावसन्तकानाम् आकारैस्तया भूताभिराकृतिभिः कृता उत्पादिता व्यया पीडा यस्य स तथोक्तोऽहम् इति इत्यमाकुलभावेन अहो क्षणमपि निर्वृतिं सुस्थतां नो आप्नोति । निर्व्वाणे सुस्थितत्वे च निर्वृतिरिति विकाण्डशेषः॥१७०

तदिति । अभ्यन्तरमन्तःपुरम् ।

इतीति । इति पूर्वदर्शितरूपेण क्रमश इति यावत् ॥१७२॥

तृतीयोऽङ्कः तृतीयः परिच्छेदः ॥१७३॥

इति श्रीशिवनाथशर्म्मकृतायां रत्नावलीटीकायां विद्योतनी समाख्यायां तृतीयाङ्कविवरणम् ॥

## चतुर्थाङ्कः।

(ततः प्रविशति रत्नमालामादाय साम्रा सुसङ्गता।)[1]

सुसं। (सकरुणं निश्वस्य॥) हा पिअसहि साअरिए हा लज्जालुए हा सहीजणवच्छले हा उदारसीले हा सोम्मदंसणे कहिं गदा सि देहि मे पडिवअणं॥ (इति रोदिति।)[2]

(ऊर्द्ध्वमवलोक्य निश्वस्य च।) हंहो दैवहदअ अकरुण असामण्णरूवसोहा तादिसी तुए जइ णिम्मिदा ता कीस उण ईदिसं अवत्थन्तरं पाविदा। इअञ्च रअणमाला जीविदणिरासाए ताए कस्स बि वह्मणस्स हत्थे पडिवादेसु त्ति भणिअ मम हत्थे समप्पिदा ता जाव कं पि वह्मणं अण्णेसामि।[3]

---

तत इति। साम्रा सवाष्प-सलिला॥१॥

सुसमिति। हेत्यादि। हा प्रियसखि सागरिके हा लज्जालुके हा सखीजनवत्सले हा उदारशीले हा सौम्यदर्शने कुत्र गतासि देहि मे प्रतिवचनम्। लज्जेति। निद्रादित्वादालुः। सखीजनेषु वत्सला स्नेहवती। स्निग्धन्तु वत्सलो वत्सः स्नेहयुक्त जने भवेदिति शब्दरत्नावली। उदारं महत् शीलं स्वभावो यस्याः सा। उदारो दातृमहतोरिति शीलं स्वभावे सद्वृत्ते इति चामरः। सौम्यं सुन्दरं दर्शनं यस्याः सा। सौम्यन्तु सुन्दरे सोमदैवते इत्यमरः॥२॥

ऊर्द्धमिति। हं होइत्यादि। हं हो दैवहतक अकरुण, असामान्यरूपशोभा तादृशी त्वया यदि निर्म्मिता तत् कस्मात् पुनरीदृशमवस्थान्तरं प्रापिता। इयञ्च रत्नमाला जीवित निराशया तया कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयेति भणित्वा मम हस्ते समर्पिता तत् यावत्

(नेपथ्याभिमुखमवलोक्य॥)अए कहं एसो क्खु बह्मणो वसन्तओ इध एव्व आअच्छदि ता इमस्सिं एव्व पडिवाद-इस्सं।[४]

ततः प्रविशति हृष्टो वसन्तकः।[५]

वस। हीही भो अज्ज क्खु पिअवअस्सेण पसादिदाए तत्तभोदीए वासवदत्ताए बन्धणादो मोचिअ सहत्थदिस्सेहिं मोदअलड्डुआहिं उदरं मे सुपूरिदं किदं। असम्भ एदं पट्टंसुअजुअलं कसाभरणं अ दिस्सं ता जाव दाणिं पिअवअस्सं पेक्खस्सं। इति परिक्रामति।[६]

सुसं। (रुदती सहसोपसृत्य॥ अज्ज वसन्तअ चिट्ठ दाव तुमं मुहुत्तअं।[७]

---

कमपि ब्राह्मणं सम्पिध्यामि। हं ही इति सम्बोधने। सम्बोधनेऽङ्गभोः पाट् प्याट् हे है हं हो ऽरे रे ऽपिचेति हेमचन्द्रः। असामान्या असाधारणी रूपशोभा यस्याः सा। साधारणन्तु सामान्यमित्यमरः॥३॥

नेपथ्येति। अवइत्यादि। अये कथमेष खलु ब्राह्मणो वसन्तकः इतएव आगच्छति तदस्मै एव प्रतिपादयिष्यामि॥४॥

ततइति। हृष्टो हर्षयुक्तः॥५॥

वसेति। हीही इत्यादि। हीही भो अद्य खलु प्रियवयस्येन प्रसादितया तत्र भवत्या वासवदत्तया बन्धनान्मोचयित्वा स्वहस्तदत्तै र्मोदकलड्डुकै रुदरं मे सुपूरितं कृतम्। इदञ्च पट्टांशुकयुगलं कर्णाभरणञ्च दत्तं तद्यावदिदानीं प्रियवयस्यं प्रेक्षिष्ये। हीहीशब्दो हास्ये हीहीशब्दो विस्मयहास्ययोरिति मेदिनी। प्रसादितया अनुग्राहितया। लड्डुकैरिति। तैलेन हविषा पक्वं भवेच्चूर्णञ्च लड्डुक इति शब्द चन्द्रिका॥६॥

सुसमिति। अज्जेत्यादि। आर्य्यवसन्तक तिष्ठ तावत् त्वं मुहूर्त्तम्॥७॥

विटू । ( दृष्ट्वा ॥ ) कधं सुसंगदा सुसङ्गदे एत्थ किं णिमित्तं रोदूअसि किं णु क्खु साअरिआए अच्चाहिदं संवुत्तं । [८]

सुसं । अज्ज बसन्तअ अहं ज्जेव णिवेदइस्सं सा क्खु तवस्सिणी देवीए उज्जइणिं पेसिदे त्ति जणप्पवादं कदुअ उवत्थिदे अद्धरत्तेण जाणीअदि कहिं णीदेत्ति। [९]

विटू । ( सोद्वेगम् ॥ ) भोदि साअरिए हा असारूसरूअसोहे हा मिदुभासिणि कहिं सि दाणिं देहि मे पडिवअणं अदिणिग्घिणं देवीए किदं । [१०]

सुसं । अज्ज बसन्तअ एसा क्खु रअणमाला ताए जीविदणिरासाए अज्ज बसन्तअस्स हत्थे पडिवादेहित्ति भणिअ मम हत्थे समप्पिदा ता णं गेह्णदु अज्जो एदम् । [११]

---

विदूइति । कधमित्यादि । कथं सुसङ्गता सुसङ्गते अत्र किं निमित्तं रोदिषि किन्नु खलु सागरिकाया अत्याहितं संवृत्तम् । अत्याहितं जीवनानपेक्षि कर्म्म । आत्मघात इति यावत् । अत्याहितं महाभीतिः कर्म्म जीवानपेक्षिचेत्यमरः ॥ ८ ॥

सुसमिति । अज्जेत्यादि । आर्य्य अहमेव निवेदयिष्यामि सा खलु तपस्विनी देव्या उज्जयिनीं प्रेषितेति जनप्रवादं कृत्वा उपस्थिते अर्द्धरात्रे न ज्ञायते कुत्र नीतेति । तपस्विनी अनुकम्प्या । कृत्वा उत्पाद्य ॥ ९ ॥

विदूइति । भोदीत्यादि । भवति सागरिके हा असामान्यरूप शोभे हा मृदुभाषिणि कुत्रासि देहि मे प्रतिवचनम् अति निर्घृणं देव्याः कृतम् । निर्घृणं निर्दयम् । जुगुप्साकरुणे घृणे इत्यमरः ॥ १० ॥

सुसमिति । अज्जेत्यादि । आर्य्य वसन्तक एषा खलु रत्नमाला तया जीवितनिराशया आर्य्यवसन्तकस्य हस्ते प्रतिपादयेति भणित्वा

विदू। ( साशं सकरुणं कर्णौ पिधाय ॥ ) भोदि कधं मम ईदिसे पत्थावे एदं गेह्निदुं हत्थो पसरदि ॥ (इत्युभौ रुदितः।)[१२]

सुसं। (अञ्जलिं बद्ध्वा।) ताए एव्व अणुग्गहं करन्तो अङ्गीकरेदु एदं अज्जो।[१३]

विदू। (विचिन्त्य॥) अह वा उवणेहि जेण इमाए ज्जेव्व सात्रारिआविरहुक्कण्ठिदं पिअवअस्सं विणोदेमि।[१४]

सुसं। (वसन्तकस्य हस्ते रत्नमालां ददाति।)[१५]

विदू। (गृहीत्वा निरूप्य सविस्मयम्।) भोदि कुदो उण ईदिसस्स अलङ्कारस्स समागमो।[१६]

सुसं। अज्ज मए वि सा कोदूहलेण पुच्छिदा आसि।[१७]

---

मम हस्ते समर्पिता तन्नु गृह्णातु आर्य्य एनाम्। नन्वनुनये। प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे नन्वित्यमरः ॥११॥

विदूइति। भोदीत्यादि। भवति कथं मम ईदृशे प्रस्तावे इमां ग्रहीतुं हस्तः प्रसरति। ईदृशे प्रस्तावे जीवितनिराशयेत्युक्तौ। प्रसरति अग्रसरो भवति ॥१२॥

सुसमिति। ताएइत्यादि। तस्या एव अनुग्रहं कुर्व्वन् अङ्गीकरोतु इमामार्य्यः। अङ्गीकरोतु स्वीकरोतु ॥१३॥

विदूइति। अहेत्यादि। अथवा उपनय येन अनयैव सागरिकाविरहोत्कण्ठितं प्रियवयस्यं विनोदयामि। उपनय रत्नमालामुपहर। विनोदयामि आनन्दयामि ॥१४॥

सुसमिति। सुगमम् ॥१५॥

विदूइति। भोदीत्यादि। भवति कुतः पुनरीदृशस्य अलङ्कारस्य समागमः। सागरिकया कुतः प्राप्तोऽयमलङ्कार इतिभावः ॥१६॥

सुसमिति। अज्जेत्यादि। आर्य्य मयापि सा कौतूहलेन पृष्टा आसीत्। कौतूहलेन ज्ञानाभिलाषेण ॥१७॥

विदू। तदो ताए किं भणिदं।[18]

सुसं। तदो सा उड्ढं पेक्खिअ दीहं णिस्ससिअ सुसङ्गदे किं दाणिं तव इमाए कधाए त्ति भणिअ रोदिदुं पउत्ता।[19]

विदू। णं कधिदं एव्व ताए सामण्णजणदुल्लहेण इमिणा परिच्छदेण सव्वधा महाभिजणसमुप्पण्णाए ताए होदव्वं। सुसङ्गदे पिअवअस्सो दाणिं कहिं।[20]

सुसं। अज्ज एसो क्खु भट्टा देवीभवणादो णिक्कमिअ फडिअसिलामण्डवं गदो ता गच्छदु अज्जो अहं वि देवीए वासवदत्ताए परिचारिणी भविस्सं॥ (इति निष्क्रान्तौ।)[21]

(प्रवेशकः।)[22]

---

विदूइति। तदो इत्यादि। ततस्तया किं भणितम्॥१८॥

सुसमिति। तदोइत्यादि। ततः सा ऊर्द्ध्वं प्रेक्ष्य दीर्घं निश्वस्य सुसङ्गते किमिदानीं तवानया कथया इति भणित्वा रोदितुं प्रवृत्ता॥१९॥

विदूइति। णमित्यादि। ननु कथितमेवतया सामान्यजनदुर्लभेनानेन परिच्छदेन सर्व्वथा महाभिजनसमुत्पन्नया तया भवितव्यम्। सुसङ्गते प्रियवयस्य इदानीं कुत्र। कथितमेव अतिमहतः पितृतः प्राप्तेयमिति व्यक्तीकृतमेव। सामान्येति। सामान्यजनस्य कथमीदृशपरिच्छदलाभसम्भव इतिभावः। सर्व्वथा अङ्गीकारे। अभिजनः कुलम्। कुलेप्यभिजनो जन्मभूम्यामित्यमरः॥२०॥

सुसमिति। अज्जेत्यादि। आर्य्य एष खलु भर्त्ता देवीभवनान्निष्क्रम्य स्फाटिकशिलामण्डपं गतः तद्गच्छत्वार्य्यः अहमपि देव्या वासवदत्तायाः परिचारिणी भविष्यामि। निष्क्रान्तौ सुसङ्गता विदूषकाविति शेषः॥२१॥

प्रवेशकस्तदाख्यो अयमंशविशेषः। अतीतानामनभिनीतानामपि

(ततः प्रविश्यासनस्थो राजा।)[२३]

राजा। (विचिन्त्य।)[२४]

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः।
प्रत्यासत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्येव तयैव वाष्पसलिलैः कोपोऽपनीतः स्वयम्॥ ५

(सोत्कण्ठं निश्वस्य॥) तावदिदानीं देव्यां प्रसादितायां सागरिकाचिन्तैव केवलं मां बाधते॥ कुतः[२६]

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय।

---

देवीप्रसादन विदूषक विमोचन सागरिका गोपनादीनां भविष्यताञ्च राजप्रवेशादीनां नीचोक्त्या नीच पात्रद्वय कृत सम्भयोजनया निदर्शकत्वात्॥२२॥

तत इति। सुगमम्॥२३॥

राजेति। विचिन्त्य स्मृत्वा॥२४॥

सव्याजैरिति। सव्याजैः सकपटैः शपथैर्दिव्यैः प्रियेण प्रीतिकरेण वचसा वाक्येन अधिकं कालं व्याप्य चित्तानुवृत्त्या चित्तपरिचर्य्यया परेण एकान्तेन वैलक्ष्येण विस्मयान्वितभावेन पादपतनैर्नतिभिः तथा मुहुः पुनः पुनः सखीनां वाक्यै र्देवी तथा प्रत्यासत्तिं प्रसादं नहि उपगता प्राप्ता यथा रुदत्या रुदरोदनया तयैव देव्या वाष्पसलिलैरश्रुजलैः प्रक्षाल्येव स्वयमात्मना कोपोऽपनीतः शमितः। मानभञ्जनप्रकारमानाह दर्पणे। सामभेदश्च दानञ्च नत्युपेक्षे रसान्तरम्। तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात्। तत्र प्रियवचः सामभेद स्तत्सख्युपार्ज्जनम्। दानं व्याजेन भूषादेः पादयोः पतनं नतिरिति॥२५॥

सोत्कण्ठमिति। रागेत्वलब्धविषये वेदना महतीतु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इति। बाधते पीडयति॥२६॥

सद्यःपतन्मदनमार्गणरन्ध्रमार्गैः
मन्ये मम प्रियतमा हृदयं प्रविष्टा।[२७]

(विचिन्त्य।) योऽपि मे विश्रामस्थानं वसन्तकः सोऽपि देव्या संयतः तत्कस्याग्रतो बाष्पमोक्षं करिष्ये। (इति निश्वसिति।)[२८]

(ततः प्रविशति वसन्तकः।)[२९]

वस। (परिक्रम्यावलोक्य च सविस्मयम्।) एसो क्खु णिरन्तरुक्कण्ठापरिक्खामं पि सलाहणिज्जतणुं समुव्वहन्तो उदिदो दुदिआचन्दो विअ अहिअदरं सोहदि पिअवअस्सो ता जाव णं उवसप्पामि।[३०]

---

अम्भोजेति। अम्भोजस्य पद्मस्य गर्भवदभ्यन्तरवत् सुकुमारा कोमला तनुर्यस्याः सा असौ प्रियतमा तदा पूर्व्वं प्रथमरागेण नवानुरागेण घने निरवकाशे कण्ठग्रहे कण्ठाश्लेषसमये विलीय द्रवीभूय सद्यस्तत्क्षणे पतद्भिर्मदनमार्गणैः कन्दर्पशरैर्यानि रन्ध्राणि छिद्राणि तदात्मकैर्मार्गैः पथिभिः करणैर्मन्ये मम हृदयं प्रविष्टा। अतस्तच्चिन्तैव मां बाधते। अत्रोत्प्रेक्षालङ्कारः॥२७॥

विचिन्त्येति। संयतो बद्धः। बाष्पमोक्षं रोदनम्॥२८॥

ततइति। सुगमम्॥२९॥

वसेति। एसो इत्यादि। एष खलु निरन्तरोत्कण्ठापरिक्षामामपि श्लाघनीयां तनुं समुद्वहन् उदितो द्वितीयाचन्द्र इव अधिकतरं शोभते प्रियवयस्यस्तद्यावत् एनमुपसर्पामि। निरन्तरया अविच्छिन्नया उत्कण्ठया मनोवेदनया परिक्षामां परिक्षीणाम्। श्लाघनीयां प्रशंसनीयाम्। द्वितीयेति। द्वितीयाचन्द्रस्य क्षीणत्वेऽपि प्रशंसनीयमूर्त्तिकत्वादिति भावः॥३०॥

(उपसृत्य।) सोत्थि भवदे भो दिट्ठिआ वड्ढसि देवीहत्थगदेणावि मए पुणो वि एदेहिं अच्छीहिं जं दिट्ठोसि।[२१]

राजा। (दृष्ट्वा सहर्षम्।) अये वसन्तकः प्राप्तः सखे परिष्वजस्व माम्।[२२]

विदू। (परिष्वज्य।) भो वअस्स देवीए अणुग्गहीदोह्मि।[२३]

राजा। वेशेनैव निवेदितस्ते देव्याः प्रसादः तत्कथ्यतामिदानीं सागरिकायाः का वार्त्तेति।[२४]

विदू। (सवैलक्ष्यमधोमुखस्तिष्ठति।)[२५]

राजा। वयस्य किन्न कथयसि।[२६]

विदू। अप्पिअं दे णिवेदिदुं ण पारेमि।[२७]

---

उपेति। सोत्थीत्यादि। स्वस्ति भवते भो दिष्ट्या वर्द्धसे देवीहस्तगतेनापि मया पुनरपि एताभ्यामक्षिभ्यां यद्दृष्टोसि। दिष्ट्या आनन्दे। वर्द्धसे अभ्युदेषि। एताभ्यामक्षिभ्य मिति। चक्षुषोरत्यन्तनिमीलनमेव सम्भावितमासीदिति भावः॥२१॥

राजेति। परिष्वजस्व आलिङ्ग। आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम्। अङ्कपालिः परीरम्भः क्रोडीकृतिरिति हैमः॥२२॥

विदूइति। भो इत्यादि। भो वयस्य देव्या अनुगृहीतोऽस्मि॥२३॥

राजेति। वेशेन पट्टांशुकादिना। निवेदितो विज्ञापितः॥२४॥

विदूइति। सवैलक्ष्यं किं वक्तव्यमिति ज्ञानराहित्येन सविस्मयम्॥२५॥

राजेति। सुगमम्॥२६॥

विदूइति। अप्पिअमित्यादि। अप्रियं ते निवेदयितुं न पारयामि। पारयामि शक्नोमि॥२७॥

राजा। (सोद्वेगम् ससम्भ्रमम्।) वयस्य कथमप्रियं किं व्यक्तमेवोत्सृष्टं जीवितं तया। हा प्रिये सागरिके। (इति मोहं नाटयति।)[३८]

विदू। ससम्भ्रमम्।) समस्ससदु समस्ससदु पिअ-वअस्सो।[३९]

राजा॥ (समाश्वस्य सास्रम्।)[४०]

माया: परित्यजत काममदक्षिणां मां
रे दक्षिणा भवत मद्वचनं शृणुध्वम्।
शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा।[४१]

---

राजेति। व्यक्तं निश्चितम्। उत्सृष्टं त्यक्तम्॥३८॥

विदूइति। समेत्यादि। समाश्वसितु समाश्वसितु प्रियवयस्यः॥३९॥

राजेति। समाश्वस्य सम्यक् सुस्थीभूय। आश्वासः पुंसि निर्वृता-विति मेदिनी। सास्रं सवाष्पम्॥४०॥

मायाइति। रेइति सम्बोधने। भो रे हे ह्योऽपि चा मन्त्रेइति धनञ्जयः। रे माया अदक्षिणामसरलं कुटिलमिति यावत् मां काममेकान्तं परित्यजत दक्षिणा दक्षिणदिग्गामिनोभवत दक्षिणप्रयाणे अदक्षिणाश्रयणमनुचितमिति पूर्वत्र दक्षिणशब्दः श्लिष्टः प्रयुक्तः। मद्वचनं शृणुध्वं मदुक्तमवति समनस्काभवत मद्वचनं त्वरितं पालयतेति यावत्। अन्यार्थं पुनर्व्वचनमिति न्यायात्। अन्यथा किं स्यादित्यत आह यदि शीघ्रं नयात गच्छत तत् तदा मुषिता हताःस्थ विफलाःस्थे-त्यर्थः। कुत इ यतआह गजगामिनी गजवत् गन्तुं शीलं यस्याः सा मन्दगामिनीति यावत्। सा सागरिका अधुना इदानीं सुदूरं बहुदूरं गता। तथाच भूयसः कालस्यातिगमात् मन्दमन्दपदविन्यासेनापि इदानीं दूरं गता तदधुनापि विलम्बने कथमपि नतामासादयिष्यथेति भावः॥४१॥

विदू। भो मा अस्सधा सम्भावेहि सा क्खु तवस्सिणी देवी ए उज्जइणिं पेसिदत्ति सुणीअदि अदो मए अप्पिअं त्ति भणिदम्।[४२]

राजा। कथमुज्जयिनीं प्रेषिता अहो निरनुरोधिता मयि देव्याः वयस्य केन तवैतदाख्यातम्।[४३]

विदू। भो सुसङ्गदाए। अस्सं च मम हत्थे ताए केणावि कज्जेण इअं रअणमाला पेसिदा।[४४]

राजा। किमपरं मामाश्वासयितुम्। तद्वयस्य उपनय।[४५]

विदू। (उपनयति॥)[४६]

राजा। (गृहीत्वा रत्नमालां निर्व्वर्ण्य हृदये निधाय।) अहह।[४७]

---

विदूइति। भो इत्यादि। भो मा अन्यथा सम्भावय सा खलु तपस्विनी देव्या उज्जयिनीं प्रेषितेति श्रूयते अतोमया अप्रियमिति भणितम्। अन्यथा अजीवनम्। सम्भावय मन्यस्व॥४२॥

राजेति। निरनुरोधिता अननुवर्त्तिता नेष्टसम्पादकतेतियावत्। अनुरोधोऽनुवर्त्तनमित्यमरः। आख्यातं कथितम्॥४३॥

विदूइति। भो इत्यादि। भोः सुसङ्गतया। अन्यच्च ममहस्ते तया केनापि कार्य्येण इयं रत्नमाला प्रेषिता। कार्य्येण उद्देशेन॥४४॥

राजेति। अपरं कार्य्यमितिशेषः। आश्वासयितुं सुस्थीकर्त्तुं प्रेषितेतिशेषः। तत् तस्मात्। तथाचोक्तम्। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोपिगदितइति॥४५॥

विदूइति। उपनयति समीपं नयति॥४६॥

राजेति। निर्व्वर्ण्य दृष्ट्वा। निर्व्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः। अहहेति खेदे। अहहेत्यद्भुते खेदे इत्यमरः॥४७॥

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयाऽनया।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥[४८]

वयस्य त्वं परिधत्स्वैनां येन वयमेनामपि तावद्दृष्ट्वा धृतिङ्करिष्यामः ॥[४९]

विदू। जं भवं आणवेदि॥ इति कण्ठे परिदधाति।)[५०]

राजा। (सास्रम् निश्वस्य।) वयस्य दुर्लभं पुनर्दर्शनं प्रियायाः।[५१]

विदू। (सभयम् दिशोऽवलोक्य।) भो मा एव्वं उच्चं मन्तेहि कदा वि को वि देवीए एत्थ सञ्चरेदि।[५२]

(ततः प्रविशति वेत्रहस्ता वसुन्धरा॥)[५३]

वसु। (उपसृत्य।) जअदु जअदु भट्टा। एसो क्खु रुमण्णदो भाइणेओ बिजअबम्मा किं पि निवेदिदुं दुआरे चिट्ठदि।[५४]

---

कण्ठेति। तस्याः सागरिकायाः कण्ठाश्लेषं कण्ठसम्पर्कं समासाद्य प्राप्य प्रभ्रष्टया स्खलितया अनया रत्नमालया कर्त्र्या तस्या रत्नमाला सदृशी अवस्था दशा यस्याः सा। तनोरपि कण्ठाश्लेषमासाद्य प्रभ्रष्टत्वादितिभावः। अतएव सखीव इयं मम तनुराश्वास्यते हस्ती-क्रियते। अत्रोपमालङ्कारः ॥४८॥

वयस्येति। परिधत्स्व कण्ठे धारय। धृतिं धैर्यम् ॥४९॥

विदूइति। जमित्यादि। यद्भवानाज्ञापयति ॥५०॥

राजेति। सुगमम् ॥५१॥

विदूइति। भो इत्यादि। भो मा एवमुच्चैर्मन्त्रयस्व कदापिकोपि देव्या अत्र सञ्चरति। देव्याः कोपि परिजन इति शेषः ॥५२॥

ततइति। वसुन्धरा प्रतीहारी। यदाह भरतः। सन्धिविग्रह-सम्बद्धं नानाकार्य्यसमुत्थितम्। निवेदयन्ति याः कार्य्यं प्रतीहार्य्यस्तु ताःस्मृता इति ॥५३॥

राजा। वसुन्धरे अविलम्बितं प्रवेशय।[५५]

वसु। जं देवो आणवेदि ॥ (इतिनिष्क्रम्य विजयवर्म्मणा सह पुनः प्रविश्य च।) विजअवम्म एसो क्खु भट्टा ता उपसप्पदु अज्जो णं।[५६]

विजय। (उपसृत्य।) जयति जयति देवः। देव दिष्ट्या वर्द्धसे रुमख्वतो विजयेन।[५७]

राजा। (सपरितोषम्।) विजयवर्म्मन् अपि जिताः कोशलाः।[५८]

विजय। देवस्य प्रभावेण।[५९]

राजा। साधु रुमख्वन् साधु अचिरान्महत्प्रयोजनमनुष्ठितम्। विजयवर्म्मन् तत्कथय कथामतिविस्तरतः श्रोतुमिच्छामि।[६०]

विजय। देव श्रूयताम्। वयमितो देवादेशात्कतिपयैरेवाहोभिरनेककरितुरगपत्तिदुर्न्निवारेण महता बलसमू-

---

वसुमिति। जअदु इत्यादि। जयति जयति भर्त्ता। एष खलु रुमख्वतो भागिनेयो विजयवर्म्मा किमपि निवेदयितुं द्वारेतिष्ठति। रुमख्वतः तन्नाम्नः सेनापतेः॥५४॥

राजेति। सुगमम्॥५५॥

वसुमिति। जमित्यादि। यद्देव आज्ञापयति। विजेत्यादि। विजयवर्म्मन् एष खलु भर्त्ता तदुपसर्पतु आर्य्यएनम्॥५६॥

विजयेति। सुगमम्॥५७॥

राजेति। अपिः प्रश्ने। कोशला दक्षिणकोशलाः॥५८॥

विजयेति। प्रभावेण कोषदण्डजतेजसा। प्रभावस्य यत्तेजः कोषदण्डजमित्यमरः। जितादृतिशेषः॥५९॥

राजेति। प्रयोजनं कोशलविजयरूपम्। अतिविस्तरतः आमूलादवसानपर्य्यन्तम्॥६०॥

देन गत्वा विन्ध्यदुर्गावस्थितस्य कोशलनृपतेर्द्वारमवष्टभ्य सेनाः समावेशयितुमारब्धवन्तः ।६१

राजा । ततस्ततः ।६२

विजय । ततः कोशलेश्वरोऽपि अतिदर्पात् परिभवम-सहमानो हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान ।६३

विदू । भो लहुं लहुं आचक्ख वेवदि मे हिअअं ।६४

राजा । ततस्ततः ।६५

विजय । कृतनिश्चयश्चासौ ।६६

योद्धुं निर्गत्य विन्ध्याद्भवदभिमुखस्तत्क्षणं दिग्विभागान् विन्ध्येनेवापरेण द्विपपतिपृतनापीडबन्धेन रुन्धन् ।

---

विजयेति । कतिपयैः कतिभिः । पत्तिः पदातिः । विन्ध्येन पर्वतेन वप्रभूतेन योदुर्गः अट्टालकादियुक्तदुर्गमस्थानम् । तथाच मात्स्यम् । दुर्गञ्च परिखोपेतं वप्राट्टालकसंयुतम् । शतघ्नीशस्त्र-मुख्यैश्च शतशश्च समावृतमिति । तदवस्थितस्य तत्र स्थितस्य । द्वारं निर्गमणमार्गम् । द्वारं पुनर्निर्गमनेऽभ्युपाये इति विश्वः । अवष्टभ्य अभि-रुध्य । अवात् स्तन्भोराश्रयनिकटयोरिति षत्वम् । समावेशयितुं व्यवस्थापयितुम् ॥६१॥

राजेति । सुगमम् ॥६२॥

विजयेति । अतिदर्पादतिगर्व्वात् । परिभवमसह्यत्कृताक्रमणम् । हस्तिनां समूहो हास्तिकम् । विकारसङ्घेत्यादिना सङ्घार्थिकण् । हास्तिकं गजताष्वन्दे इत्यमरः । तस्य प्रायोबाहुल्यं यत्र तत् । प्रायोभूम्न्यन्त-गमने इत्यमरः ॥६३॥

विदूइति । भोइत्यादि । भो लघुलघु आचक्ष्व वेपते मे हृदयम् ॥६४॥

राजेति सुगमम् ॥६५॥

विजयेति । असौ कोशलेश्वरः ॥६६॥

योद्धुमिति । असौ कोशलेश्वरः विन्ध्यात् विन्ध्यदुर्गात् निर्गत्य तत्-क्षणं तदानीमेव अपरेण द्वितीयेन विन्ध्येनेव द्विपपतीनां हस्तिपतीनां

वेगाद्बाणान्विमुञ्चन्नथ समदगजोत्पिष्टपत्तिर्निपत्य
प्रत्यायाद्वाञ्छिताप्तिद्विगुणितरभसस्तं रुमण्वान् क्षणेन ।६७

अपि च ।६८

अस्तव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे क्षणं
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्म्मोद्दलद्वह्निनि ।
आहूयाजिमुखे स कोशलपतिर्भग्ने प्रधाने बले॥६९

---

पृतनानां पत्तीनाञ्च या सम्यक् पीडा परस्परसंघर्षो यस्मिन् तादृशेन बन्धेन निवेशनेन दिग्विभागान् दिग्विशेषान् रुन्धन् निरवकाशान् कुर्वन् योद्धुमभिमुखः संमुखोऽभवत् अथानन्तरं बाणान् विमुञ्चन् विक्षिपन् तथा समदेन मदमत्तेन गजेन उत्पिष्टा विमर्द्दिता पत्तिः पदातिर्येन स तथोक्तो रुमण्वान् वेगान्निपत्य गजाङ्कमावतीर्य्य वाञ्छितस्य कोशलेश्वरसाङ्मुख्यस्य आप्त्या लाभेन द्विगुणितो द्विगुणीकृतो रभसो वेगो यस्य स तादृशः सन् तं कोशलेश्वरं क्षणेन प्रत्यायात् प्राप॥६७॥

अपिचेति। अन्यच्चेत्यर्थः॥६८॥

अस्तेति। अस्तव्यस्तानि क्षिप्तपर्य्याकुलानि शिरस्त्राणि शीर्षकाणि लौहनिर्म्मितशिरश्छादकानीति यावत् यै स्तथोक्तैः शस्त्रकषणैः शस्त्राघातैः कृत्तानिच्छिन्नानि उत्तमाङ्गानि शिरांसि यत्र तत्तस्मिन्। अथ शीर्षकं शीर्षण्यञ्च शिरस्त्रे इत्यमरः। तथा क्षणं क्षणेनैव। क्षणार्थेऽपि क्षणात्क्षण मित्यव्ययवर्गे त्रिकाण्डशेषः। व्यूढा धृता असृजां रुधिराणां सरिन्नदी येन तत्तस्मिन्। रुधिरेऽसृक्लोहितास्ररक्तक्षतजशोणितमित्यमरः। तथा स्वनन्ति शब्दायमानानि प्रहरणान्यस्त्राणि यस्मिन् तत् तस्मिन्। तथा वर्म्मभ्यः कवचेभ्य उद्दलन्त उद्गच्छन्तो वह्नयोऽनला यस्मिन् तत् तस्मिन्। आजिमुखे समराग्रे। स्त्रियः संयत्समित्याजिसमिद्युध इत्यमरः।प्रधाने बले सैन्ये भग्ने विनष्टे सति एकेन अद्वितीयेनैव रुमण्वता आहूय शरशतैः करणैः मत्तद्विपस्थो मत्तहस्तिगतः स कोशलपतिर्हतो विनाशितः। दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप इत्यमरः॥६९॥

राजा। कथमस्मदीयान्यपि बलानि भग्नानि।७०

विजय। एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः।७१

विदू। जेदु जेदु भवं जिदं अम्हेहिं। (इति नृत्यति।)७२

राजा। साधु कोशलपते साधु मृत्युरपि ते श्लाघ्यः यस्य हि रिपवोऽपि पुरुषकारमेवं वर्णयन्ति। ततस्ततः ७३

विजय। देव ततो रुमण्वानपि कोशलेषु मद्भ्रातरं ज्यायांसं जयवर्म्माणं स्थापयित्वा प्रहारव्रणितहास्तिकमायमशेषसैन्यमनुवर्त्तमानः शनैःशनैरागच्छत्येव।७४

राजा। वसुन्धरे उच्यतां यौगन्धरायणः प्रदर्श्यतां मत्प्रसादस्य विभव इति।७५

---

राजेति। भग्ने प्रधाने बले इत्येतत् पर्य्यन्तोक्तौ स्वपक्षपराजयमाशङ्कमानः पृच्छति कथमिति॥७०॥

विजयेति। पूर्व्वश्लोकस्य शेषपादं पठन् पराजयशङ्कां निरस्यति एकेनैवेति। पूर्व्वं व्याख्यातम्॥७१॥

विदूइति। जेदुइत्यादि। जयति जयति भवान् जितमस्माभिः॥७२॥

राजेति। श्लाघ्यः प्रशंसनीयः। रिपवः शत्रवः। पुरुषकारं पुरुषोचितक्रियाम्॥७३॥

विजयेति। ज्यायांसं ज्येष्ठम्। ज्योऽयमस्य यस्मा इतिइयसुनन्तस्य ज्यः ईयसोरीकारस्याकारः। अनुवर्त्तमानः अनुसरन्। शनैर्मन्दं मन्दम्। अद्रुतेशनैरित्यमरः॥७४॥

राजेति। प्रसादस्य अनुग्रहस्य। विभवः शक्तिः। प्रदर्श्यतां प्रकाश्यताम्। समधिकपारितोषिकप्रदानादिना परितोषयैतमितिभावः। इति उच्यत मिति सम्बन्धः॥७५॥

वसु। जं देवी आणवेदि ॥ (इति विजयवर्म्मणा सह निष्क्रान्ता।)[७६]

(ततः प्रविशति काञ्चनमाला।)[७७]

काञ्च। आणत्त ह्मि देवीए जह गच्छ कञ्चणमाले एदं इन्दजालिअं अज्जउत्तस्स दंसेहि त्ति।[७८]

(परिक्रम्यावलोक्य च।) एसो क्खु भट्टा ता जाव णं उवसप्पामि।[७९]

(उपसृत्य।) जेदु जेदु भट्टा। भट्टा देवी विण्णवेदि एसो क्खु उज्जयिणीदो सम्बरसिद्धि णाम इन्दजालिओ आअदो ता पेक्खदु भट्टा।[८०]

राजा। अस्ति नः कौतुकमैन्द्रजालिके ततः शीघ्रं प्रवेशय।[८१]

काञ्च। जं भट्टा आणवेदि। (इति निष्क्रम्य पिच्छिकाहस्तेनैन्द्रजालिकेन सह प्रविशति।)[८२]

---

वसुमिति। जमित्यादि। यद्देव आज्ञापयति ॥७६॥

ततइति। सुगमम् ॥७७॥

काञ्चेति। आणेत्यादि। आज्ञप्तास्मि देव्या यथा गच्छ काञ्चनमाले इममैन्द्रजालिकमार्य्यपुत्रस्य दर्शयेति। इन्द्रजालं मायां वेत्तीत्यैन्द्रजालिकस्तम् ॥७८॥

परीति। एसोइत्यादि। एष खलु भर्त्ता तद्यावदेनमुपसर्पामि। यावदवधारणार्थः ॥७९॥

उपेति। जेदु इत्यादि। जयति जयति भर्त्ता भर्त्तर्देवी विज्ञापयति एष खलु उज्जयिनीतः सम्बरसिद्धिर्नाम ऐन्द्रजालिक आगतः तत् प्रेक्षतां भर्त्ता ॥८०॥

राजेति। कौतुकं कुतूहलं दिदृक्षेति यावत्। इत्यमरस्तु समालोके लोलता स्यात् कुतूहलमिति ॥८१॥

चेटी। एदु एदु अज्जो।[८३]

ऐन्द्रजालिकः। परिक्रामति।[८४]

चेटी। एसो भट्टा ता उपसप्पदु अज्जो।[८५]

ऐन्द्र। (उपसृत्य।) जअदु जअदु भट्टा॥[८६]

(पिच्छिकां भ्रमयित्वा बहुधा हास्यं कृत्वा॥)[८७]

पणमत चलने इन्दस्स इन्दजाल त्ति लद्धणामस्स।

तह एव्व अज्ज अनुरस्स सम्बरस्स सुपरिट्ठिदजसस्स॥[८८]

देव किं॥

धरणीए मिअअङ्को आआसे महिहरो जले जलणो।

मज्झह्णम्मि पओसो सिज्जउ तह देहि आणत्ति॥[८९]

---

कञ्चुकीति। जनित्वादि। वक्तुं त्तो आज्ञापयति। पिच्छिका चामरम्॥८२॥

चेटीति। एदु एदु अज्जो एतु एतु आर्यः॥८३॥

ऐन्द्रेति। सुगमम्॥८४॥

चेटीति। एसोइत्यादि। एष भर्त्ता तदुपसर्पतु आर्यः॥८५॥

ऐन्द्रेति। जअदु जअदु भट्टा जयति जयति भर्त्ता॥८६॥

पिच्छिकामिति चामरमित्यर्थः॥८७॥

पणमतेति। प्रणमत चरणे इन्द्रस्य इन्द्रजालेति लब्धनाम्नः। तथैवाद्य अनुरस्य सम्बरस्य सुप्रतिष्ठितयशसः। इन्द्रजालेति शब्देन यस्य ग्रहीतं नाम यस्य स तस्य इन्द्रस्य चरणे पादावच्छेदे प्रणमत नमस्कुरुत। तथैव अद्य सुप्रतिष्ठितं माया पदार्थाविष्करणात् विख्यातं यशो यस्य स तस्य सम्बरस्य तन्नाम्नो ऽसुरस्य चरणे प्रणमत। तथा चामरः। मायातु शाम्बरीति। पूर्वार्द्धे परार्द्धेच त्रिंशत्त्रिंशन्मात्रा सत्त्वादुद्गाथाच्छन्दः। तदुक्तं पूर्वार्द्धे उत्तरार्द्धे मात्रात्रिंशत्त्रि सुभग संभविता। सो उग्गाहो वुत्तो पिङ्गल कइ दिट्ठ सट्ठि मत्तङ्गोईति॥८८॥

देवेति। देव किमिति शेषः। विधत्त तथा आज्ञप्तिं देहीति श्लोकीयनान्वयः। धरणीत्यादि। धरण्यां मृगाङ्क आकाशे महीधरो जले

अहवा

किं जप्पिदेण बहुणा जं जं हिअएण महसि सं दिट्ठुं।

तं तं दंसेमि अहं गुरुणो मन्तप्पहावेण॥९०

विदू। भो वअस्स अवहिदो होहि भो ईदिसो से अवट्ठम्भो जेण एव्वं सम्भावीअदि॥९१

राजा। भद्र तिष्ठ तावत् काञ्चनमाले उच्यतां देवी युष्मदीय एवायमैन्द्रजालिकः विजनीकृतश्चायमुद्देशस्त-दागच्छ सहितावेव पश्यावः॥९२

चेटी। जं भट्टा आणवेदि। (इति निष्क्रम्य वासव-दत्तया सह प्रविशति॥)९३

वास। कञ्चणमाले उज्जइणीदो आअदो त्ति अत्थि मे तस्सिं इन्दजालिए अक्खवादो॥९४

---

ज्वलनः। मध्याह्नेपि प्रदोषः क्रियतु तथा देहि आज्ञाम्। मृगाङ्कश्चन्द्रमाः। महीधरः पर्व्वतः। ज्वलनो वह्निः। प्रदोषो रजनीमुखम्। आज्ञप्तिमादेशम्॥८९॥

अहवेति। अथवेत्यर्थः। किमित्यादि। किं जल्पितेन बहुना यत् यत् हृदयेन वाञ्छसि संद्रष्टुम्। तत् तत् दर्शयामि अहं गुरोर्मन्त्र प्रभावेण। जल्पितेन भाषितेन॥९०॥

विदूइति। भो इत्यादि। भो वयस्य अवहितो भव। भो ईदृशो ऽस्यावष्टम्भः येन एवं सम्भाव्यते॥९१॥

राजेति। युष्मदीयः युष्मत् पित्रनगरवासी। विजनीकृतो निर्ज्जनीकृतः। उद्देशः प्रदेशः। सहितौ मिलितौ समहस्त्वित्यर्थः॥९२॥

चेटीति। जं भट्टा आणवेदि यद्भर्त्ता आज्ञापयति ९३॥

वासेति। कञ्चेति। काञ्चनमाले उज्जयिनीत आगतइति अस्ति मे तस्मिन्नैन्द्रजालिके पक्षपातः। पक्षपातोऽनुरागः॥९४॥

काञ्च। णादिउलबहुमाणो क्खु एसो देवीए ता एदु एदु भट्टिणी।

(इति परिक्रामतः॥)९५

काञ्च। भट्टिणि एसो भट्टा ता उवसप्पदु देवी॥९६

वास। (उपसृत्य।) जेदु जेदु अज्जउत्तो॥९७

राजा। देवि बहुतरमनेन गर्ज्जितं तदिहस्थावेव पश्यावस्तावत्॥९८

वास। (उपविशति।)९९

राजा। भद्र प्रस्तूयतां बहुविधमिन्द्रजालम्॥१००

ऐन्द्र। जं देवो आणवेदि। (इतिबहुविधं नाट्यं कृत्वा पिच्छिकां भ्रमयन्॥)१०१

हरिहरबम्भप्पमुहं देवं दंसेमि देवराअं च।
गअणे वि सिद्धचारणसुरबहुसत्थं च णच्चन्तं॥१०२

---

काञ्चेति। णादीत्यादि। ज्ञातिकुलबहुमानः खलु एष देव्याः तदेतु एतु भर्त्री। एष पक्षपातः। ज्ञातिकुलेषु पितृकुलेषु बहुमान आदरस्तत्प्रयुक्त इत्यर्थः। ज्ञातिस्तातसगोत्रयोरिति मेदिनी॥९५॥

काञ्चेति। भट्टिणीत्यादि। भर्त्रि एष भर्त्ता तदुपसर्पतु देवी॥९६॥

वासेति। जेदु इत्यादि। जयति जयति आर्य्यपुत्रः॥९७॥

राजेति। गर्जितमत्रकर्म्मण्यध्यवसितम्॥९८॥

वासेति। सुगमम्॥९९॥

राजेति। प्रस्तूयता मारभ्यताम्॥१००॥

ऐन्द्रेति। जमित्यादि। यद्देव आज्ञापयति। नाट्यं नृत्यादिकम्॥१०१॥

हरिहरेति। हरिहरब्रह्मप्रमुखं देवं दर्शयामि देवराजञ्च। गगनेपि सिद्धचारण सुरबधूसार्थञ्च नृत्यन्तम्। प्रमुखशब्दोत्र आद्यार्थः प्रधानार्थीवा। सिद्धा देवयोनिविशेषाः। कीर्त्तिं चारयन्तीति चारणा

(सर्व्वे सविस्मयं पश्यन्ति ॥)[103]

राजा। ऊर्द्धं दृष्ट्वा आसनादवतरन्। (आश्चर्य्य-माश्चर्य्यम् ॥)[104]

विदू। अच्चरीअं अच्चरीअं ॥[105]

राजा। देवि पश्य ॥[106]

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्य्यः॥[107]

वास। अच्चरीअं अच्चरीअं ॥[108]

---

देवनटा स्तेषां सुराणाञ्च वधूसार्थं वधूसमूहम्। सार्थोवणिक्समूहे स्यादपि सङ्घातमात्रके इति विश्वः ॥१०२॥

सर्व्वे इति। सुगमम् ॥१०३॥

राजेति। सुगमम् ॥१०४॥

विदूइति। अच्चरीअं आश्चर्य्यम् ॥१०५॥

राजेति। सुगमम् ॥१०६॥

एषइति। देवि सरोजे पद्मोपरि एषब्रह्मा। रजनिकरस्य चन्द्रस्य कला शेखरः शिरोभूषायस्य सोऽयं शङ्करः। धनुः शार्ङ्गम् असिर्नन्दकः गदा कौमोदकी चक्रं सुदर्शनं तान्येव चिह्नानि तैः सहितैश्चतुर्भिर्दोर्भि र्बाहुभि र्विशिष्टः। तृतीया विशेषणे। असौ दैत्यान्तको विष्णुः। शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तुनन्दकः। गदाकौमोदकीचापं शार्ङ्गं चक्रं सुदर्शनमिति हेमचन्द्रः। ऐरावतस्थः स्ववाहनस्थितस्त्र एष त्रिदशपतिरिन्द्रोऽपि। तथा अमी अन्ये देवाः। चलेषु चञ्चलेषु चरणेषु रणन्तः शब्दायमाना नूपुरा यासां तास्तथोक्ता एतादिव्यनार्य्यः स्वर्लोकस्त्रियश्च व्योम्निआकाशे नृत्यन्ति देवि पश्य ॥१०७॥

वासेति। अच्चरीअं आश्चर्य्यम् ॥१०८॥

विदू। (अपवार्य्य।) हा दासीए पुत्त इन्दजालिअ किं एदेहिं देवेहिं अच्छराहिं च दंसिदाहिं जइ दे इमिणा परितुट्ठेण कज्जं ता दंसेहि साअरिअं॥१०९

(ततः प्रविशति वसुन्धरा॥)११०

वसुं। (राजानमुपसृत्य।) जेदु जेदु भट्टा अमच्चो जोअन्धराअणो विण्णवेदि। एसो क्खु विक्कमबाहुणा पधानमच्चो वसुभूदी अणुप्पेसिदो ता अरिहसि देव इम्मस्सिं एव्व सुन्दरमुहुत्तए पेच्छिदुं अहं पि कज्जसेसं समाप्पिअ आअदो ज्जेव त्ति॥१११

वास। अज्ज उत्त चिट्ठदु दाव इन्दजालं मातुलकुलादो अज्जो अमच्चप्पधाणो वसुभूदी आअदो ता एदं दाव पेक्खदु अज्जउत्तो॥११२

---

विदूइति। अपवार्य परिहृत्य। तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्यप्रकाशने इतिदर्पणः। हेत्यादि। हादास्याः पुत्र ऐन्द्रजालिक किमेतैर्देवैरप्सरोभिश्च दर्शितैः यदिते अनेन परितुष्टेन कार्य्यं तत्दर्शय सागरिकाम्। किं फलमितिशेषः। एतैरिति पुंस्त्वः प्राधान्यात् पुंस्त्वम्। अनेनराज्ञा॥१०९॥

ततइति। सुगमम्॥११०॥

वसुमिति। जेदुइत्यादि। जयति जयति भर्त्ता आमात्यो यौगन्धरायणो विज्ञापयति एष खलु विक्रमबाहुना प्रधानामात्यो वसुभूतिरनुप्रेषितः तदर्हसिदेवः अस्मिन्नेव सुन्दरमुहूर्त्ते प्रेक्षितुम् अहमपिकार्य्यशेषं समाप्य आगतएवइति। विक्रमबाहुना सिंहलेश्वरेण। वसुभूतिर्नाम। सुन्दरमुहूर्त्ते निर्दोषसमये। कार्य्यशेषं राज्यकार्य्यावशेषम्॥१११॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र तिष्ठतु तावदिन्द्रजालं मातुलकुलात् आर्य्यो अमात्यप्रधानो वसुभूतिरागत स्तदिमं तावत्प्रेक्षतां आर्य्य-

राजा॥ यथाह देवी॥११३

(ऐन्द्रजालिकं प्रति।) भद्र विश्रम्यतामिदानीम्॥११४

ऐन्द्र। (पुनः पिच्छिकां भ्रमयित्वा।) जं देवो आण-वेदि। (इति निष्क्रामन्।) एक्को उण मह खेलणओ अवस्सं देवेण पेक्खिदव्वो॥११५

राजा। भद्र द्रक्ष्यामः॥११६

वास। कञ्चणमाले गच्छ तुमं देहि से पारितोसिअं॥११७

चेटी। जं देवी आणवेदि। (इतिऐन्द्रजालिकेन सह निष्क्रान्ता।)११८

राजा। वसन्तक प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः॥११९

विदू। जं भट्टा आणवेदि। (इतिनिष्क्रान्तः॥)१२०

---

पुत्रः। तिष्ठतु चिरमस्तु। मातुलः सिंहलेश्वरः। तत्कुलात् तद्भव-नात्। कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीब-मिति मेदिनी। इमं वसुभूतिम्॥११२॥

राजेति। यथेति तथाक्रियते इतिशेषः॥११३॥

ऐन्द्रेति। विश्रम्यतां विरम्यताम्॥११४॥

ऐन्द्रेति। जमित्यादि। यत्देव आज्ञापयति। एक्कोइत्यादि। एकं पुन र्मम खेलनकमवश्यं देवेन प्रेक्षितव्यम्। खेलनकमैन्द्रजालिकं कर्म्म॥११५॥

राजेति। सुगमम्॥११६॥

वासेति। कञ्चेत्यादि। काञ्चनमाले गच्छत्वं देह्यस्य पारितो-षिकम्॥११७॥

चेटीति। जमित्यादि। यत् देवी आज्ञापयति॥११८॥

राजेति। प्रत्युद्गम्य अग्रतोगत्वा॥११९॥

विदूइति। जमित्यादि। यद्भर्त्ता आज्ञापयति॥१२०॥

( ततः प्रविशति वसन्तकेन सह वसुभूतिः बाभ्रव्यश्च॥)[१२१]

विदू। एदु एदु अमच्चो ॥[१२२]

वसु। (समन्तादवलोक्य।) अहो वत्सेश्वरस्यानुभावः॥ तथाहि[१२३]

आक्षिप्तो जयकुञ्जरेण तुरगान् निर्वर्णयन् वल्लभान्
सङ्गीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन् क्षणम्।
सद्योविस्मृतसिंहलेशविभवः कक्षाप्रदेशेऽप्यहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाऽहं कृतः ॥[१२४]

बाभ्र। अद्य खलु चिरात् स्वामिनं द्रष्टा-

---

ततइति। सुगमम् ॥१२१॥

विदू इति। एदु एदु अमच्चो एतु एतु अमात्यः ॥१२२॥

वसुइति। समन्तात् सर्व्वतः। वत्सेश्वरस्य उदयनस्य। अनुभावः प्रभावः। अनुभावः प्रभावेस्यान्निश्चये भाव सूचने इति विश्वः ॥१२३॥

आक्षिप्तइति। जयकुञ्जरेण राजवाह्यहस्तिना। राजवाह्यो विजयकुञ्जर इति विकाण्डशेषः। आक्षिप्तः अतिरमणीय तया आकृष्टः तया वल्लभान् प्रियान् तुरगान् निर्वर्णयन् चिरं पश्यन् तया सङ्गीत ध्वनिना सङ्गीतशालागतगीतस्वरेण हृतः अपहृतचित्तः तया क्षितिभृतां राज्ञां गोष्ठीषु सभासु क्षणं तिष्ठन्। समज्या परिषद्गोष्ठी सभेत्यमरः। सद्यः तत्क्षणे विस्मृतः सिंहलेशस्य विभवः सम्पत्तिर्येन स तथोक्तो अहं कक्षायाः प्रकोष्ठस्य प्रदेशे एकदेशेऽपि। कक्षा प्रकोष्ठे हर्म्यादेरित्यमरः। द्वाःस्थेन द्वारगतेनैव महता कुतूहलेन दर्शनादि लालसया। द्वाःस्थेनेवेति पाठे द्वारपालेनेव महता कुतूहलेनेत्यर्थः। प्रतीहारो द्वारपाल द्वाःस्थ द्वाःस्थित दर्शका इत्यमरः। ग्राम्यो यथा अदृष्टनगरइव कृतः। अहो विस्मये। वद्वा यथा तथैवैवं साम्ये इत्यमरः ॥१२४॥

बाभ्रेति। अयस्यान्तरं जराकृतकम्पादि दोषाधिक्यरूपं तस्यानि-

मीति यत्सत्यमानन्दातिशयेन किमप्यवस्थान्तरमनुभवामि कुतः ॥१२५

विद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-
दविस्पष्टां दृष्टिं तिरयति पुनर्व्वाष्पसलिलैः।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ॥१२६

विदू। (अग्रे भूत्वा।) एदु एदु अमच्चो ॥१२७

वसु। (विदूषकस्य कण्ठे रत्नमालां दृष्ट्वा अपवार्य्य।) बाभ्रव्य जाने सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थान-समये दत्तेति ।१२८

---

हत्वेन यत्शब्देन निन्दाद्योतिता। यद्गर्हा द्वेत्वनशु योरितिमेदिनी॥१२५॥

विद्धिमिति। हि यस्मात् परितोष आनन्दातिशयः साध्वसवशात् भृत्यभावोचितभययोगात् कम्पस्य जराकृतस्य विद्धिमाधिक्यं प्रथयतितरामतिशयेन प्रकाशयति। किमेव्याच्चाद्रूव्यइति चतराम्। पुनर्वाष्पसलिलैः आनन्दोत्थितैरस्रुवारिभिः करणैः अविस्पष्टां वार्द्धक्याक्षुप्रप्रायां दृष्टिं तिरयति अन्तर्द्धापयति नाशयतीति यावत्। तिरोऽन्तर्द्धौ त्विन्यमरः। णेः कत्याख्यानेणिजिरिति णिः। जीमंस्वेति डित्त्वाद टिलोपः। तथा स्खलन्तो वार्द्धक्यात् यथा वदनुच्चार्य्यमाणा वर्णा यस्यां तां वाणीं वाचं गद्गदतया आनन्दोत्थितेन स्वरवैजात्येन करणेन जडयतितरामतिशयेन जडीकरोति। एवं रूपेण परितोषोऽद्य जराया वार्द्धक्यस्य साहाय्यं सहायतां कुरुते। अतः किमप्यवस्थान्तरमनुभवामीति पूर्व्ववाक्येन सम्बन्धः। कञ्चुकिप्रकारमाह भरतः। जरा वैक्लव्ययुक्तेन विशङ्गालेण कञ्चुकीति ॥१२६॥

विदू इति। एदु एदु अमच्चो एतु एतु अमात्यः ॥१२७॥

वसु इति। जाने अनुभवामि। देवेन सिंहलेश्वरेण। राजपुत्र्यै रत्नावल्यै ॥१२८॥

बाभ्र। अमात्य अस्ति सादृश्यं तत्किं वसन्तकादयं गच्छामि प्रभवमस्याः।[११९]

वसु। बाभ्रव्य मा मैवं महति राजकुले रत्नवाहुल्यान्न दुर्लभो भूषणानां संवादः। (इति परिक्रामति।)[१२०]

विदू। (राजानमुद्दिश्य।) एसो वच्छाधिवो ता उवसप्पदु अमच्चो।[१२१]

वसु। (उपसृत्य।) जयति जयति देवः।[१२२]

राजा। (उत्थाय।) अभिवादये।[१२३]

वसु। अतिश्रेयांस्त्वं भूयाः।[१२४]

राजा आसनमासनमार्य्यीय।[१२५]

विदू। (आसनमादाय।) भो एदमासणं उवविसदु अमच्चो।[१२६]

---

बाभ्रेति। प्रभवम् आद्योपलब्धिस्थानम्। स्याज्जन्महेतुः प्रभवः स्थानञ्चाद्योपलब्धये इत्यमरः॥११९॥

वसुइति। साधारणे। मा स्म मालञ्च वारणे इत्यमरः। राजकुले राजगृहे। संवादः सौसादृश्यम्॥१२०॥

विदूइति। एसोइत्यादि। एष वत्साधिपस्तदुपसर्पतु अमात्यः॥१२१॥

वसुइति। सुगमम्॥१२२॥

राजेति। अभिवादये प्रणमामि। प्रधानमन्त्रिणो ब्राह्मणतया राज्ञः प्रणामः। तथाच मनुः। सर्वेषान्तुविशिष्टेन ब्राह्मणेन विपश्चिता। मन्त्रयेत् परमं मन्त्रं राजाषाड्गुण्य संयुतइति॥१२३॥

वसुइति। अतिश्रेयान् अतिप्रशस्यः। प्रशस्यः श्रइति ईयसौश्रः। भूयादिति ठराशिषोति आशिषिठो॥१२४॥

राजेति। आर्य्यीयेति दीयतामितिशेषः॥१२५॥

विदूइति। भो इत्यादि। भो इदमासनम् उपविशतुअमात्यः॥१२६॥

वसु। उपविशति।[१३७]

कञ्चु। देव बाभ्रव्यः प्रणमति।[१३८]

राजा। (पृष्ठे हस्तं दत्त्वा।) बाभ्रव्य इत आस्यताम्।[१३९]

कञ्चु। (उपविश्य।) देवि बाभ्रव्यः प्रणमति।[१४०]

विदू। अमच्च एसा देवी वासवदत्ता पणमदि।[१४१]

वास। अज्ज पणमामि।[१४२]

वसु। आयुष्मति वत्सराजसदृशपुत्रमाप्नुहि।[१४३]

राजा। आर्य्य वसुभूते अपि कुशलं तत्रभवतः सिंहलेश्वरस्य।[१४४]

---

वसुइति। सुगमम्॥१३७॥

कञ्चु इति। राज्ञामन्तःपुररक्षकः सौविदल्लापरनामा वृद्धः पुरुषः कञ्चुकी सोऽत्र बाभ्रव्यः। तल्लक्षणं यथा भरतः। ये विद्या सत्त्वसम्पन्नाः कामदोषविवर्जिताः। ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृता इति। तथा। स्नातकाः कञ्चुका ये च तथा वर्षवराश्च ये। ये स्थायिकाश्च निर्मुण्डाः कक्षास्थानेषु योजयेत् इति। अभियादनविधौ मनुः। अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्म्मतः। असावहं भो नामेति सम्यक् प्रणतिपूर्व्वकमिति। राज्ञां वृद्धत्वं गुरुत्वात्। यथा उपाध्यायः पिताज्येष्ठो भ्राता चैव महीपतिरित्यादि॥१३८॥

राजेति। इतः अस्मिन्॥१३९॥

कञ्चु इति। सुगमम्॥१४०॥

विदू इति। अमेत्यादि। अमात्य एषा देवी वासवदत्ता प्रणमति॥१४१॥

वासेति। अज्ज पणमामि आर्य्य प्रणमामि॥१४२॥

वसु इति। आयुः प्रशस्तिरस्ति यस्याः सा आयुष्मती॥१४३॥

राजेति। अपिः प्रश्ने। तत्र भवतः श्लाघ्यस्य। गौरविताख्यार्य्यमिश्राः श्लाघ्यास्तत्र भवत्प्रमुखाइति त्रिकाण्डशेषः॥१४४॥

वसु । (ऊर्द्ध्वमवलोक्य निश्वस्य च ।) देव न जाने किं विज्ञापयामि मन्दभाग्यः । (अधोमुखस्तिष्ठति ।)१४५

बाभ्र । (सविषादमात्मगतम् ।) हद्धी हद्धी किं दाणिं वसुभूदी कधइस्सदि ।१४६

राजा । वसुभूते कथय किमेवं मां पर्य्याकुलयसि ।१४७

बाभ्र । (अपवार्य्य ।) चिरमपि स्थित्वा यत् कथनीयं तदिदानीमेव कथ्यताम् ।१४८

वसु । (सास्रम् ।) देव न शक्यं निवेदयितुं तथाप्येष कथयामि मन्दभाग्यः यासौ तत्रभवतः सिंहलेश्वरस्य दुहिता रत्नावली नामायुष्मती सिद्धादेशेनादिष्टा योऽस्याः पाणिग्रहणं करिष्यति स सार्व्वभौमो राजा भविष्यतीति ।१४९

राजा । ततस्ततः ।१५०

---

वसुइति । न जाने नानुमनामि ॥१४५॥

बाभ्रेति । हद्धीत्यादि । हा धिक् हा धिक् किमिदानीं वसुभूतिः कथयिष्यति ॥१४६॥

राजेति । किं कथम् । पर्य्याकुलयसि आकुलीकरोषि ॥१४७॥

बाभ्रेति । चिरमपि स्थित्वा विलम्बं कृत्वापि । वक्तव्यम् अवश्यं वाच्यम् ॥१४८॥

वसुइति । निवेदयितुं विज्ञापयितुम् । सिंहलेश्वरस्य विक्रमबाहोः । सिद्धस्य मन्त्रसिद्धस्य कस्यचिदादेशेन वाक्येन । आदिष्टा विज्ञापिता । किमित्याह इत्यन्तम् । सार्व्वभौमो भूचक्रस्येश्वरः । सर्व्वां भूमिं भुनक्तियइति योगः । सुभगादित्वादुभयोः पदयोर्वृद्धिः । चक्रवर्त्ती सार्व्वभौमो नृपोऽन्योमण्डलेश्वर इत्यमरः ॥१४९॥

राजेति । सुगमम् ॥१५०॥

वसु। तत्प्रत्ययादार्य्यार्थं यौगन्धरायणेन बहुशः प्रार्थ्यमानाऽपि सा सिंहलेश्वरेण वासवदत्तायाश्चित्तखेदं परिहरता न दत्ता।१५१

राजा। (अपवार्य्य।) देवि किमिदमिदानीमलीकं त्वदीयमातुलामात्यः कथयति।१५२

वास। (विमृश्य।) अज्जउत्त ण आणामि को एत्थ अलिअं मन्तेदि।१५३

विदू। तदो किं संवुत्तं।१५४

वसु। ततो लावणकेन देवी दग्धेति वार्त्तामुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः पुनरपि सा प्रार्थिता च ततस्तत्रभवता सिंहलेश्वरेण देवेन सहास्माकं सम्बन्धलोपो मा भूदिति दत्ता सा रत्नावली देवाय प्रतिपादयितुमस्माभिरानीयमाना समुद्रे यानभङ्गान्निमग्ना। (इति रुदन्नधोमुखस्तिष्ठति।)१५५

---

वसुइति। तत् प्रत्ययात् सिद्धवाक्येषु विश्वासात्। प्रत्ययोऽधीन शपथज्ञानविश्वासहेतुष्वित्यमरः। आर्य्यार्थं भवदर्थम्। चित्तखेदं चेतसः सन्तापम्। सपत्नीयोगादिति भावः। परिहरता अनुत्पादयता॥१५१॥

राजेति। अलीकमसत्यम्। अलीकन्त्वप्रिये ऽनृते इत्यमरः॥१५२॥

वासेति। विमृश्य वितर्क्य। अज्जेत्यादि। आर्य्यपुत्र न ज्ञायते कोऽत्रालीकं मन्त्रयति। कः मातुलामात्योभवान् वा इत्यर्थः॥१५३॥

विदूइति। तदोइत्यादि। ततः किं संवृत्तम्। वृत्तं भूतम्॥१५४॥

वसुइति। लावणकेन सिंहलेश्वरनगरवासिना वार्त्तां जनश्रुतिम्। तदन्तिकं सिंहलेश्वरसमीपम्। देवायभवते। प्रतिपादयितुं पात्रसात् कर्त्तुम्। यानभङ्गात् पोतभङ्गात्॥१५५॥

वास। (सास्रम्।) हा हदच्छि मन्दभाइणी हा बहिणि रअणावलि कहिं दाणिं सि देहि मे पड़िवअणं।[१५६]

राजा। समाश्वसिहि समाश्वसिहि दुरवगाहा गतिर्दैवस्य वाहनभङ्गपतितोत्थितौ नन्वेतावेव ते निदर्शनम्। (इति वसुभूतिबाभ्रव्यौ दर्शयति।)[१५७]

वास। अज्जउत्त जुज्जदि एव्वं परं कुदो मम एत्तिअं भाअधेअं।[१५८]

राजा। (अपवार्य्य।) बाभ्रव्य किमेवमिति सर्व्वथा मावगच्छामि।[१५९]

बाभ्र। देव श्रूयताम्।[१६०]

(नेपथ्ये महान् कलकलः।)[१६१]

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्च्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः।

---

वासेति। हेत्यादि। हा हताक्षि मन्दभागिनी हा भगिनि रत्नावलि कुत्रेदानीमसि देहि मे प्रतिवचनम् ॥१५६॥

राजेति। दुरवगाहा दुर्निरूप्या। दैवस्य भाग्यस्य। दैवं दिष्टं भागधेयं भाग्यं स्त्री नियति विधिरित्यमरः। वाहनं यानम्। ननु यस्मात्। एतौ वसुभूतिवाभ्रव्यौ ॥१५७॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र युज्यते एवं परं कुतो मम एतावत् भागधेयम्। युज्यते युक्तम्। परं किन्तु ॥१५८॥

राजेति। सर्व्वथा निश्चितम् ॥१५९॥

बाभ्रेति। श्रूयतामिति प्रस्तावएव कोलाहलात् बाभ्रव्यस्य निवेदनमसमाप्तमेव ॥१६०॥

नेपथ्यइति। कलकलः कोलाहलः ॥१६१॥

कुर्व्वन् क्रीड़ामहीध्रं सजलजलधरश्यामलं धूमपातै
रेष प्लोषार्त्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः।१६२

देवीदाहप्रवादोऽयं योऽभूल्लावणके पुरा।
करिष्यन्निव तं सत्यमत्राग्निरयमुत्थितः॥ १६३

(सर्व्वे सम्भ्रान्ताः पश्यन्ति।) १६४

राजा। कथमन्तःपुरेऽग्निः।१६५

(ससम्भ्रममुत्थाय।) कथं देवी वासवदत्ता दग्धा।१६६

---

हर्म्येति। अर्च्चिषां शिखानां निचयैः समूहैः करणैः। अर्च्चिर्हेतिः शिखास्त्रिया मित्यमरः। हर्म्याणां मट्टालिकानां सम्बन्धे हेमशृङ्गेण स्वर्णमयशिखरेण याश्रीः शोभा। श्रीर्वेशरचना शोभेति विश्वः। तामादधान उत्पादयन्निव। तथा सान्द्रा निरन्तरा ये उद्यानस्य द्रुमाग्रच्छा स्तेषामग्राणां शिखराणां ग्लपनेन शोषणेन पिशुनितः सूचितो अत्यन्ततीव्रो अति तीक्ष्णः प्रखर इति यावत् अभितापोयस्य स तथोक्तः। शिरोऽग्र्यं शिखरं वानेति तीव्रं तीक्ष्णं खरमिति चामरः। तथा धूमपातैः धूमयोगैः करणैः क्रीडामहीध्रं क्रीडार्थनिर्म्मितपर्व्वतम्। महीध्रे शिखरिक्ष्माभृद्हार्य्यधरपर्व्वता इत्यमरः। सजलो जलसहितो यो जलोधरो मेघस्तद्वत् श्यामलं कुर्व्वन् एषोऽग्निः प्लोषेण दाहेन आर्त्ता विपन्ना योषिज्जना नारीजना यत्र तत् तस्मिन् इह अन्तःपुरे सहसा अतर्कितमेव उत्थित उद्भूतः॥१६२॥

देवीति। पुरा प्राक् लावणके सिंहल राजधानीस्थजनसमूहे अद्य यद्यपि विद्यमानो यो देव्या वासवदत्ताया दाहप्रवादो अभूत् उदपादि अयमग्निस्तं प्रवादं सत्यं करिष्यन्निव अत्रान्तःपुरे उत्थितः॥१६३॥

सर्व्वे इति। सम्भ्रान्ताः जातसंवेगाः॥१६४॥

राजेति। सुगमम्॥१६५॥

ससम्भ्रममिति। सुगमम्॥१६६॥

वास । अज्जउत्त परित्ताहि परित्ताहि ।[१६७]

राजा । अये कथमतिसम्भ्रमात्पार्श्वस्थापि देवी नोपलक्षिता ।[१६८]

देव्याः पाणिं गृहीत्वा आलिङ्ग्य देवि समाश्वसिहि समाश्वसिहि ।[१६९]

वास । अज्जउत्त मए अत्तणो किदे ण भणिदं किं उण एसा क्खु मए णिग्घिणाए इध णिअड़े संजमिदा साअरिआ विवज्जदि ता परित्ताअदु अज्जउत्तो ॥[१७०]

राजा । कथं देवि सागरिका विपद्यते एष गच्छामि ।[१७१]

वसु । देव किमिदमकारणे एव पतङ्गवृत्तिः क्रियते ।[१७२]

बाभ्र । देव युक्तमाह वसुभूतिः ।[१७३]

---

वासेति । अज्जेत्यादि । आर्यपुत्र परित्रायस्व परित्रायस्व ॥१६७॥

राजेति । अये सम्भ्रमे । अति सम्भ्रमादति संविग्नत्वात् । उपलक्षिता दृष्टा ॥१६८॥

देव्या इति । गृहीत्वा अवलम्ब्य ॥१६९॥

वासेति । अज्जेत्यादि । आर्यपुत्र मया आत्मनः कृते न भणामि किं पुनरेषा खलु मया निर्घृणया इह निगडसंयमिता सागरिका विपद्यते तत् परित्रायतामार्यपुत्रः । कृते अर्थे । किं पुनः किन्तु । इह अन्तःपुरे । निगडेन शृङ्खलेन संयमिता बन्धनं नीता । विपद्यते म्रियते । अथ शृङ्खले । अन्दुको निगडोऽस्त्रीत्यमरः ॥१७०॥

राजेति । सुगमम् ॥१७१॥

वसुरिति । किं कथम् । इदमिति क्रियाविशेषणम् । अकारणे अल्पकारणे । पतङ्गाः शलभास्तेषां वृत्तिराचारः । पतङ्गा यथा स्वेच्छया वह्निं प्रविशन्ति तथा क्रियते इति भावः ॥१७२॥

बाभ्रेति । युक्तं सुचितम् ॥१७३॥

विदू। (राजानमुत्तरीये गृहीत्वा।) भो मा क्खु साहसं करेहि।[१७४]

राजा। (उत्तरीयमाकर्षन्।) अरे धिङ्मूर्ख सागरिका विपद्यते किमद्यापि प्राणाः परिरच्यन्ते। (ज्वलनप्रवेशं नाटयित्वा धूमाभिभवं नाटयति।)[१७५]

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्च्चिषां चक्रवालम्।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि॥[१७६]

वास। कधं मम दुःखभाइणीए बअणादो एवं ववसिदं अज्जउत्तेण ता किं मए हिदाए अहं पि अज्जउत्तं जेव्व अणुगमिस्सं।[१७७]

---

विदूइति। भो इत्यादि। भो मा खलु साहसं कुरु। साहसं साहसा क्रियमाणं कर्म्म॥१७४॥

राजेति। अरे सम्बोधने। सम्बोधनेऽङ्गभोः पाट् प्याड् हे है हं हो ऽरे रेपिचेति हेमचन्द्रः। अद्यापि अधुनापि। सागरिका विरह दुःखानुबन्धस्य अर्गलतो वसन्तकपरिज्ञातत्वात् तन्निवारणं श्रुत्वा धिङ्मूर्खेत्युक्तम्। ज्वलनप्रवेशं वह्निपरीतान्तःपुरप्रवेशम्। धूमाभिभवं धमाकुलत्वम्॥१७५॥

विरमेति। हे वह्ने त्वं विरम विरम अपसर अपसर धूमानुबन्ध मनवरतधूमोत्पादनं मुञ्च अर्च्चिषां शिखानां चक्रवालं मण्डलं किं कथमुच्चैरतिशयेन प्रकटयसि प्रकाशयसि। चक्रवाडन्तु मण्डल मित्यमरः। डलयोरभेद इति इङ्गाः। प्रलयदहनस्य कल्पान्तवह्ने र्भासा दीप्त्या यस्य स तेन प्रियायाः सागरिकाया विरहहुतभुजा विरहानलेन यो ऽहं, दग्ध स्तस्य सम्बन्धे त्वं किं करोषि सर्वमेव ते विफलमितिभावः॥१७६॥

विदू। (परिक्रामन् अग्रतो भूत्वा।) भोदि अहं वि पथोवदेसको होमि।१७८

वसु। कथं प्रविष्टएव ज्वलनं वत्सराजः तन्ममापि दृष्टराजपुत्रीविपत्तेर्युक्त मिहैवात्मानमाहुतीकर्त्तुम्।१७९

कञ्चु। (सास्रम्।) हा महाराज किमिदमकारण-मेवं भरतकुलं संशयतुलामारोपितम अथ वा किं प्रलापे-नाहमपि भक्तिसदृशमाचरामि॥१८०

(इति सर्व्वे अग्निप्रवेशं नाटयन्ति॥)१८१

राजा। (दक्षिणबाहुस्पन्दं निरूप्य।) एतदवस्थस्य मम कुत एतत्फलम् १८२

---

वासेति। कथमित्यादि। कथं मम दुःखभागिन्या वचनात् एवं व्यवसितमार्य्यपुत्त्रेण तदहमपि आर्य्यपुत्रमेवानुगमिष्यामि। एवम् आत्मनिरपेक्षम्। व्यवसितमध्यवसितम्॥१७७॥

विदूइति। भोदीत्यादि। भवति अहमपि पथुपदेशको भवामि। पथ्युपदेशकः पथिप्रदर्शकः॥१७८॥

वसुइति। युक्तमुचितम्। इह वह्नौ॥१७९॥

कञ्चुइति। भरतकुलं भरतवंशः। संशयतुलां सन्देहरूपतुला दण्डम् आरोपितं निवेशितम्। प्रलापेण निष्प्रयोजन वचसा। भक्ति सदृशं प्रभुभक्तेरनुरूपम्। तदनुगमन मित्यर्थः। विष्णु पुराणे। भरतस्यच पत्नीनां ये नव पुत्रावभूवु रित्यादिना भूतान् भरतसन्तानानभिधाय अतःपरं भविष्यानहं भूपालान् कीर्त्तयिष्ये इति भविष्यतः कीर्त्तयन् अधिसीमकृष्णान्निचक्षु र्येगङ्गापहृते हस्तिनापुरे कौशाम्ब्यां निवत्स्यति इत्यस्मानतिदूरे तीग्मात् बृहद्रथ स्ततोवत्सदान स्ततोटपरः शता-नीक स्तस्मान्नोदयन इत्याहस्म॥१८०॥

इतीति। क्रमेणैवप्रवृत्तेत्यर्थः॥१८१॥

राजेति। एतदवस्थस्य जीवितसंशयमङ्गीकृत्य वह्नौ प्रविष्टस्य।

(अग्रतोऽवलोक्य सहर्षोद्वेगम् ।) कथमासन्नहुतवहा वर्त्तते सागरिका तत् त्वरितमेनां सम्भावयामि ॥[183]

(ततः प्रविशति निगडसंयता सागरिका ॥)[184]

साग । (समन्तादवलोक्य ।) दिट्ठिआ समन्तदो पज्जलिदो हुदवहो अज्ज मे दुःखावसाणं करिस्सदि॥[185]

राजा । (त्वरितमुपगम्य ।) अयि प्रिये किमद्यापि मध्यस्थतया वर्त्तसे ॥[186]

साग । (राजानं दृष्ट्वा आत्मगतम् ।) कधं अज्जउत्तो ता एदं पेक्खिअ पुणो वि मे जीविदासा सम्वुत्ता ॥[187]

(प्रकाशम् ।) भट्टा परित्ताहि परित्ताहि ॥[188]

राजा । भीरु अलं भयेन ॥[189]

---

एतस्य दक्षिणबाहुस्पन्दनस्य । फलं स्त्रीलाभरूपम् । तदुक्तम् । वामेतरभुजस्पन्दोवरस्त्रीलाभसूचक इति ॥१८२॥

अग्रत इति । आसन्नः समीपवर्त्ती हुतवहो अनलो यस्याः सा । सम्भावयामि समाश्वासयामि ॥१८३॥

तत इति । निगडसंयता निगडबद्धा ॥१८४॥

सागेति । दिट्ठिआ इत्यादि । दिष्ट्या समन्ततः प्रज्वलितो हुतवहः अद्य मे दुःखावसानं करिष्यति ॥१८५॥

राजेति । अद्यापि अधुनापि । भीषणानलोप स्थानेपीत्यर्थः । मध्यस्थतया औदासीन्येन। न किमपि करोषि व्याहरसि वेतिभावः॥ १८६॥

सागेति । कधमित्यादि । कथमार्य्यपुत्रस्तदेनं प्रेक्ष्य पुनरपि मे जीविताशा संवृत्ता ॥१८७॥

प्रकाशमिति । भट्टेत्यादि । भर्त्तः परित्रायस्व परित्रायस्व ॥१८८॥

राजेति । भीरु भयशीले । क्रुक्लुकौभियइति क्रुः । स्त्रीत्वादूङ् ॥१८९॥

मुहूर्त्तमपि सह्यतां बहुलएष धूमोद्गमः---१९०

( अग्रतोऽवलोक्य । )

हहा धिगिदमंशुकं ज्वलति ते स्तनात्प्रच्युतम् ॥१९१

( विलोक्य । )

मुहुः स्खलसि किम्---१९२

(निपुणमवलोक्य ।)

कथं निगड़संयतासि द्रुतम्--

नयामि भवतीमितः प्रियतमेऽवलम्बस्व माम् ॥१९३

(कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् । )

अहो क्षणादपगतोऽयं मे सन्तापः । प्रिये समाश्वसिहि समाश्वसिहि ॥१९४

---

मुहूर्त्तमिति । एष बहुलः प्रचुरो धूमोद्गमो मुहूर्त्तं क्षणं सह्यताम् ॥१९०॥

अग्रतइति । संमुखमित्यर्थः । हहेति । हः सम्बोधने । हा विषादे । धिङ्निन्दायाम् । हः स्यात् सम्बोधने पादपूरणे च विनिग्रहे इति मेदिनी । ते तव स्तनात् प्रच्युतं भ्रष्टमिदमंशुकं वस्त्रं ज्वलति धिक् न मया रक्षितुं शक्यमितिभावः ॥१९१॥

विलोक्येति । सागरिका मितिशेषः । मुहुरिति । किं कथं मुहुः पुनः पुनः स्खलसि पतसि ॥१९२॥

निपुणमिति । साभिनिवेश मित्यर्थः । कथमिति । कथं निगडेन शृङ्खलेन संयता बद्धासि हे प्रियतमे भवतीमितोऽस्मात् स्थानात् द्रुतं शीघ्रं नयामि स्थानान्तरं प्रापयामि मामवलम्बस्व आश्रय । श्लोकस्यैवं पाठः । मुहूर्त्तमपि सह्यतां बहुल एष धूमोद्गमो हहाधिगिदमंशुकं ज्वलति ते स्तनात् प्रच्युतम् । मुहुः स्खलसि किं कथं निगडसंयतासि द्रुतं नयामिभवतीमितः प्रियतमे ऽवलम्बस्वमाम् इति ॥१९३॥

कण्ठेइति । निमीलिताक्षः मुद्रितनयनः । सकृष्ठ्यण्इति यः ।

व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः।
यतः सन्तापमेवायं स्पर्शस्ते हरति प्रिये॥[१९५]

(अश्विनी समुन्मील्य निरीक्ष्य च।) अहो महदाश्चर्य्यम्॥[१९६]

क्वासौ गतो हुतवहस्तदवस्थमेतदन्तःपुरम्--[१९७]

(वासवदत्तां दृष्ट्वा।) कथमवन्तिनृपात्मजेयम्॥[१९८]

वास। (राज्ञः शरीरं परामृशन्ती सहर्षम्।) दिट्ठिआ अक्खदसरीरो अज्जउत्तो॥[१९९]

राजा।

बाभ्रव्य एष--[२००]

बाभ्र। विजयतां महाराजः देव दिष्ट्या वर्द्धसे पुनरुच्छ्वसिताः स्मः॥[२०१]

सन्तापः कामजदाहः। समाश्वसिहि समाश्वसिहि सुस्थाभव। आश्वासः पुंसि निर्वृताविति मेदिनी। निर्वृति सुस्थितिः॥१९४॥

व्यक्तमिति। प्रिये हुताशनो वह्निर्लग्नोपि कृतस्पर्शोपि व्यक्तं निश्चितं भवतीं न धक्ष्यति सन्तापयिष्यति यतस्ते तवायं स्पर्शः सन्तापमेव हरति। भवत्याः स्पर्शात्तस्यैव तापोऽपगमिष्यतीति भावः॥१९५॥

अश्विनीदृति। अहो विस्मये॥१९६॥

क्वेति। असौ हुतवहो वह्निः क्व कुत्र गतः एतदन्तःपुरं तदवस्थं तथावस्थितमेव। श्लोकावशेषं क्रमेण पूरयिष्यति॥१९७॥

वासवदत्तामिति। कथमिति। कथमियमवन्तिनृपस्य उज्जयिनीश्वरस्य आत्मजा वासवदत्ता॥१९८॥

वासेति। परामृशन्ती स्पृशन्ती। दिट्ठीत्यादि। दिष्ट्या अक्षतशरीर आर्य्यपुत्रः। अक्षतशरीरः अदग्धदेहः॥१९९॥

राजेति। बाभ्रव्यं दृष्ट्वाह एष बाभ्रव्यः कञ्चुकी॥२००॥

बाभ्रेति। उच्छ्वसिता लब्धप्राणाः॥२०१॥

राजा। वसुभूतिरयम्--[२०२]

वसु। देव दिष्ट्या वर्द्धसे ॥[२०३]

राजा। वयस्यः--[२०४]

विदू। जेदु जेदु भवं ॥[२०५]

राजा। (विचिन्त्य सवितर्कम् ॥)

स्वप्ने मतिर्भ्रमति किं न्विदमिन्द्रजालम्।[२०६]

विदू। भो मा सन्देहं करेहि इन्दजालं क्खु एदं। भणिदं तेण दासीए उत्तेण इन्दजालिएण जह अवस्सं एव्व देवेण मह एक्को खेड़णओ दट्ठव्वो त्ति ता तं ज्जेव्व एदं ॥[२०७]

राजा। देवि त्वद्वचनात् इयमस्माभिरिहानीता सागरिका ॥[२०८]

---

राजेति। वसुभूतिं दृष्ट्वाह वसुभूतिरयमिति ॥२०२॥

वसुइति। सुगमम् ॥२०३॥

राजेति। वसन्तकं दृष्ट्वाह वयस्य इति वयमित्यनुषज्यते ॥२०४॥

विदूइति। जेदु जेदु भट्टा जयति जयति भर्त्ता ॥२०५॥

राजेति। स्वप्नइति। एवं महाश्चर्यदर्शनात् मतिर्मम बुद्धिः स्वप्ने भ्रमति स्वप्नतया भ्रान्तिमती भवति किन्तु इदमिन्द्रजालम्। ननु स्वप्न इत्यर्थः। श्लोकस्यैवं पाठः। कासौ गतो हुतवहस्तदवस्थमेतदन्तः-पुरं कथमवन्तिनृपात्मजेयम्। बाभ्रव्य एष वसुभूतिरयं वयस्यः स्वप्ने मतिर्भ्रमति किन्न्विदमिन्द्रजालमिति ॥२०६॥

विदूइति। भो इत्यादि। भो मा सन्देहं कुरु इन्द्रजालं खलु इदम्। भणितं तेन दास्याः पुत्रेण ऐन्द्रजालिकेन यथा अवश्यमेव देवेन मम एकं खेलनकं द्रष्टव्यमिति तत् तदेवेदम्। खलु एवधारणे ॥२०७॥

राजेति। त्वद्वचनात् त्वदादेशात् ॥२०८॥

वास। (विहस्य।) अज्जउत्त जाणिदं दे सव्वं ॥२०९

वसु। (सागरिकां दृष्ट्वा अपवार्य।) बाभ्रव्य सुसदृशीयं राजपुत्र्याः ॥२१०

बाभ्र। अमात्य ममाप्येतदेव मनसि वर्त्तते ॥२११

वसु। (प्रकाशम् राजानमुद्दिश्य।) देव कुत इयं कन्यका ॥२१२

राजा। देवी जानाति ॥२१३

वसु। देवि कुतः पुनरियं कन्यका। २१४

वास। अमच्च एसा क्खु साअरादो पाविदेत्ति भणिअ अमच्चजोअन्धराअणेण मम हत्थे णिक्खित्ता अदो एव्व साअरिआ त्ति सद्दाईअदि ॥२१५

राजा। (स्वगतम्।) कथं यौगन्धरायणेन न्यस्ता कथमसौ ममानिवेद्य किञ्चित्करिष्यति ॥२१६

---

वासेति। अज्जेत्यादि। आर्य्यपुत्र ज्ञातं ते सर्व्वम्। सर्व्वम् आमूलवृत्तान्तजातम् ॥२०९॥

वसुइति। राजपुत्र्याः सिंहलेश्वरदुहितुः ॥२१०॥

बाभ्रेति। एतदेव भवदुक्तमेव ॥२११॥

वसुइति। कुतइति आयादितेतिशेषः ॥२१२॥

राजेति। सुगमम् ॥२१३॥

वसुइति। सुगमम् ॥२१४॥

वासेति। अमच्चेत्यादि। अमात्य एषा खलु सागरात् प्राप्तेति भणित्वा अमात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता अतएव सागरिकेति शब्द्यते। निक्षिप्ता न्यस्ता। शब्द्यते उच्यते ॥२१५॥

राजेति। असौ यौगन्धरायणः। ममेति सम्बन्धमात्रविवक्षायां षष्ठी। अनिवेद्य अविज्ञाप्य ॥२१६॥

वसु। (अपवार्य्य।) बाभ्रव्य यथा कुसद्दशी वसन्तकस्य कण्ठे रत्नमाला अस्या अपि सागरात्प्राप्तिः तथा व्यक्तं सिंहलेश्वरस्य दुहिता रत्नावलीयम्॥२१७

(उपसृत्य प्रकाशम्।) आयुष्मति रत्नावलि राजपुत्ति त्वमीदृशावस्थां गतासि॥२१८

साग। (वसुभूतिं दृष्ट्वा सास्रम्।) कधं अमच्चो वसुभूदी॥२१९

वसु। हा हतोऽस्मि मन्दभाग्यः। (इति भूमौ पतति।)२२०

साग। हा हदह्मि मन्दभाइणी हा ताद हा अब्ब कहिं सि देहि मे पड़िवअणं। (इत्यात्मानं पातयन्ती मोहमुपगता।)२२१

वास। (ससंभ्रमम्।) कञ्चुइ इयं सा मम बहिणिआ रअणावली॥२२२

कञ्चु। देवि इयमेव सा॥२२३

वस्विति। तथा आश्वासहेतुः। व्यक्तं निश्चितम्॥२१७॥

उपेति। उपसृत्य सागरिकामुपगम्य। ईदृशावस्थां निगडसंयमम्॥२१८॥

सागेति। कधमित्यादि। कथममात्यो वसुभूतिः॥२१९॥

वस्विति। सुगमम्॥२२०॥

सागेति। हेत्यादि। हा हतास्मि मन्दभागिनी। हा तात हा अम्ब कुत्रासि देहि मे प्रतिवचनम्। प्रतिवचनं परिदेवनोत्तरम्। पातयन्ती भ्रमा वितिशेषः॥२२१॥

वासेति। कञ्चुइत्यादि। कञ्चुकिन् इयं सा मम भगिनी रत्नावली। सा श्रुतिमात्र गोचरा॥२२२॥

वास। (रत्नावलीमालिङ्ग्य।) बहिणि समस्सस समस्सस ॥२२४

राजा। कथमुदात्तवंशप्रभवस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम् ॥२२५

विदू। (रत्नमालां दृष्ट्वा स्वगतम्।) पढमे एव्व जाणिदं मए णहु सामण्णजणस्स ईदिसो परिच्छदो होदि त्ति॥२६

वसु। (उत्थाय।) राजपुत्रि समाश्वसिहि समाश्वसिहि नन्वियं ज्यायसी ते भगिनी दुःखमास्ते तत्परिष्वजस्वैनाम् ॥२२७

रत्नावली। (समाश्वस्य राजानं तिर्य्यगवलोक्य स्वगतम्।) कदावराधा क्खु अहं देवीए ण सक्कणोमि मुहं दंसिदुं।(इत्यधोमुखी तिष्ठति।)२२८

वास। (सास्रं बाहू प्रसार्य्य।) एहि अदिनिट्ठुरे पिअवहिणि दाणिं एहि सिणेहं दंसेहि। (इति कण्ठे गृह्णाति।)२२९

---

कञ्चु इति। सुगमम् ॥२२३॥

वासेति। बहीत्यादि। भगिनि समाश्वसिहि समाश्वसिहि ॥२२४॥

राजेति। उदात्तवंशप्रभवस्य महाकुलसम्भूतस्य ॥२२५॥

विदू इति। पढमे इत्यादि। प्रथममेव ज्ञातं मया नहि सामान्यजनस्य ईदृशः परिच्छदो भवतीति। परिच्छदः अलङ्कारः ॥२२६॥

वसु इति। ज्यायसी ज्येष्ठा। दुःखं कष्टं यथास्यात्तथा। परिष्वजस्व आलिङ्ग ॥२२७॥

रत्नेति। तिर्य्यक् वक्रम्। कदेत्यादि। कृतापराधा खलु अहं देव्याः न शक्नोमि मुखं दर्शयितुम् ॥२२८॥

( रत्नावली स्खलितं नाटयति । )२२०

वास। (अपवार्य्य। ) अज्जउत्त लज्जेमि अहं इमिणा अत्तणो णिसंसत्तणेण ता लहुं अपणेहि से एदं बन्धणं।२२१

राजा। (सपरितोषम्। ) यथाह देवी। (इति सागरिकाया बन्धनमपनयति।)२२२

वास। अज्जउत्त अमच्च जोगन्धराअणेण एत्तिअं कालं दुज्जणीकिदह्मि जेण जाणन्तेण वि ण मे णिवेदिदं।२२३

( ततः प्रविशति यौगन्धरायणः । )२२४

यौग। देव्या मद्वचनात्तथाभ्युपगतः पत्युर्व्वियोगो महान्
सा देवान्यकलत्रसंघटनया दुःखं मया प्रापिता।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया॥२२५

---

रत्नेति। स्खलितं पतनम्॥२२०॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र लज्जे अहमनेनात्मनो नृशंसत्वेन तल्लघु अपनयास्या इदं बन्धनम्। नृशंसत्वेन क्रूराचारेण निगडबन्धनेनेति यावत्। अपनय मोचय॥२२१॥

राजेति। सुगमम्॥२२२॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र अमात्ययौगन्धरायणेन एतावन्तं कालं दुर्जनीकृतास्मि येन जानतापि न मे निवेदितम्। कालमिति व्याप्येत्यर्थः। सदाध्वादि व्याप्ताविति कर्म्मता। दुर्जनीकृता रत्नावल्यां क्रूराचारिणीकृता॥२२३॥

तत इति। सुगमम्॥२२४

यौगेति। देव्या इति। तथा मद्वचनात् इमां कन्यां पालयेति मम वचनात् देव्या वासवदत्ताया महान् बलवान् पत्युर्वियोगो भर्त्तृविरहो अभ्युपगतः उपस्थितः अतः सा देवी देवस्य राज्ञो अन्य कलत्रसङ्घट-

अथवा किं क्रियते ईदृशमत्यन्तमाननीयेष्वपि निरनुरोध-वृत्ति स्वामिभक्तिव्रतम्। २२६

निरूप्य। अयं देवो महाराजः यावदुपसर्पामि। २२७

उपसृत्य। जयति जयति देवः। (पादयोर्निपत्य।) देव क्षम्यतां यन्मया अनिवेद्य कृतम्। २२८

राजा। कथय किमनिवेद्य कृतम्। २२९

यौग। करोत्वासनपरिग्रहं देवः सर्व्वं विज्ञापयामि। २४०

(सर्व्वे राज्ञा सह यथास्थानमुपविशन्ति।) २४१

यौग। देव श्रूयतां येयं सिंहलेश्वरस्य दुहिता सा सिद्धेनादिष्टा यथा योऽस्याः पाणिग्रहणं करिष्यति स सार्व्वभौमो राजा भविष्यतीति ततस्तत्प्रत्ययादस्माभिः स्वामिनो-

---

नया भार्य्यान्तरसंयोजनया। कलत्रं श्रोणिभार्य्ययोरित्यमरः। मया दुःखं प्रापिता। प्रभोर्देवस्य अयं जगतां भुवनानां स्वामित्वलाभो राजत्वप्राप्तिस्तस्या देव्याः प्रीतिं करिष्यति सत्यं तथापि लज्जया वदनं दर्शयितुं नो शक्नोमि॥२२५॥

अथवेति। अत्यन्तमाननीयेषु अतिमान्येष्वपि जनेषु निरनुरोधा अनुरोधरहिता वृत्तिराचारो यस्य तत् तथोक्तं स्वामिनि प्रभौ भक्ति-रूपं व्रतम् ईदृशम् इतरदुःखनिरपेक्षम्॥२२६॥

निरूप्येति। यावदवधारणे॥२२७॥

उपेति। अनिवेद्य अविज्ञाप्य॥२२८॥

राजेति। सुगमम्॥२२९॥

यौगेति। आसनपरिग्रहमुपवेशनम्॥२४०॥

सर्व्वे इति। यथा स्थानमुचितस्थाने॥२४१॥

इयमङ्गुलिनिर्द्दिष्टा रत्नावली। सिद्धेन मन्त्रसिद्धेन। आदिष्टा उक्ता। सिद्धवचनमाह यथेत्यादि। सार्व्वभौमः सर्व्वासां भूमीनामी-

ऽर्थे बहुशः प्रार्थ्यमानापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता ।२४२

राजा । तदा किम् ।२४३

यौग । (सलज्जम् ।) तदा लावणिकेन देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः ।२४४

राजा । यौगन्धरायण ततःपरं श्रुतं मया अथेयं देवी हस्ते किमित्यनुचिन्त्य स्थापिता ।२४५

विदू । भो अणाचक्खिदो वि एदस्स अभिप्पाओ मए जाणिदो एव्व जह अन्तेउरगदा अन्तेउरगदस्स सुहेण णअणपधं गमिस्सदि त्ति ।२४६

---

श्वरः । तत्प्रत्ययात् मन्त्रसिद्धजने विश्वासात् । स्वामिनो भवतः । खेदं विषादम् । परिहरता अनुत्पादयता ॥२४२॥

राजेति । सुगमम् ॥२४३॥

यौगेति । सलज्जमिति देवी सांमुख्यादिति भावः । लावणिकेन सिंहलराजधानीवासिना । प्रसिद्धिं ख्यातिम् । तदन्तिकं सिंहलेश्वरसमीपम् । बाभ्रव्यः कञ्चुकी प्रहितः प्रेरितः । पुनः स्वामिनोऽर्थे प्रार्थनार्थे इति शेषः । तदुक्तं भरतेन । प्रेरणेचार्थसंयुक्ते कञ्चुकीयान् नियोजयेदिति ॥२४४॥

राजेति । अथ शब्दः प्रश्ने । मङ्गलानन्तरारम्भ प्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । अनुचिन्त्य विचिन्त्य । स्थापिता न्यस्ता ॥२४५॥

विदू इति । भो इत्यादि । भो अनाख्यातोऽपि एतस्याभिप्रायो मया ज्ञात एव यथा अन्तःपुरगता अन्तःपुरगतस्य सुखेन नयनपथं गमिष्यतीति । अनाख्यातोऽपि अकथितोऽपि । अन्तःपुरगतस्य भवत इति शेषः । सुखेन विनायासेन । नयनपथं दृष्टिविषयताम् ॥२४६॥

राजा। यौगन्धरायण गृहीतस्तेऽभिप्रायो वसन्तकेन।२४७॥

यौग। यदाज्ञापयति देवः।२४८

राजा। ऐन्द्रजालिकवृत्तान्तोऽपि मन्ये त्वत्प्रयोगएव।२४९

यौग। अन्यथा अन्तःपुरे बद्धाया अस्याः कुतो देवेन दर्शनम् अदृष्टायाश्च वसुभूतिना कुतः परिज्ञानम्।२५०

(विहस्य।) परिज्ञातायाश्च भगिन्याः सम्प्रति यथा करणीयं तत्र देवी प्रमाणम्।२५१

वास। (सस्मितम्।) अज्ज अमच्च फुडं एव्व किं ण भणासि अज्जउत्ते पडिवादेहि रअणावलीं त्ति।२५२

विदू। भोदि सुट्ठु तुए जाणिओ एत्तिओ अमच्चस्स अभिप्पाओ।२५३

वास। (हस्तौ प्रसार्य।) एहि रअणावलि एहि किम्पि दाणिं मे बहिणिआअणुरूवं होदु। (इति रत्ना-

---

राजेति। गृहीतो ज्ञातः॥२४७॥

यौगेति। सुगमम्॥२४८॥

राजेति। त्वत्प्रयोगस्त्वत्प्रयुक्तः॥२४९॥

यौगेति। अस्याः रत्नावल्याः। परिज्ञानं प्रत्यभिज्ञानम्॥२५०॥

विहस्येति। परिज्ञातायाः परिचितायाः। प्रमाणं निश्चयकृत्॥२५१॥

वासेति। अज्जेत्यादि। आर्य्य अमात्य स्फुटमेव किं न भणसि आर्य्यपुत्रे प्रतिपादय रत्नावलीमिति। स्फुटं स्पष्टम्। किं कथम्॥२५२

विदू इति। भोदीत्यादि। भवति सुष्ठुत्वया ज्ञातो अमात्यस्याभिप्रायः। सुष्ठु सुन्दरम्॥२५३॥

वासेति। एहीत्यादि। एहि रत्नावलि एहि किमपीदानीं मे भगिन्यनुरूपं भवतु। किमपि किञ्चित्। इदानीं न पूर्व्वं भगिन्यनुरूपं

वलीं स्वकीयैराभरणैरलङ्कृत्य हस्ते गृहीत्वा राजानमुपसृत्य।) देव पडिच्छ एदं रअणावलीं।[२५४]

राजा। (सहर्षं हस्तौ प्रसार्य्य।) को देव्याः प्रसादो न बहु मन्यते। (इति सागरिकां गृह्णाति।)[२५५]

वास। अज्जउत्त दूरे क्खु एदाए णादिउलं ता तह करेदु जह बन्धुजणं ण सुमरेदि। (इति समर्पयति।)[२५६]

राजा। यथाज्ञापयति देवी।[२५७]

विदू। (सहर्षं नृत्यति।) ही ही भो जअदु जअदु भवं पुहवी क्खु दाणिं हत्थगदा पिअवअस्सस्स।[२५८]

वसु। राजपुत्रि वासवदत्तां प्रणामेनार्च्चय।[२५९]

---

कर्मासीदिति भावः। भगिन्यनुरूपं भगिनीयोग्यं कर्म्मेति भावः। पूर्व्वं निगडबन्धनादिना यत्किञ्चिद्गृहीतासि तत् सपत्न्यनुरूपमेव इदानीं प्रतिपादनन्तु किञ्चित् भगिन्यनुरूपं भवतीति भावः। इति इत्युक्त्वा उपसृत्य उपगम्य। देवेत्यादि। देव प्रतीच्छ एतां रत्नावलीम्। प्रतीच्छ गृहाण॥२५४॥

राजेति। प्रसादः प्रसन्नतया प्रतिपादितं वस्तु॥२५५॥

वासेति। अज्जेत्यादि। आर्य्यपुत्र दूरे खल्वस्या ज्ञातिकुलं तत् तथा कुरु यथा बन्धुजनं न स्मरति। ज्ञातिकुलं पितृकुलम्। ज्ञातिः स्तात सगोत्रयोरिति मेदिनी। तथेति। भर्त्तुरतिसौभाग्यलाभादेव बन्धुजनं न स्मरतीतिभावः। समर्पयति हस्तं प्रापयति॥२५६॥

राजेति। सुगमम॥२५७॥

विदू इति। हीहीत्यादि। हीही भोः जयति जयति भवान् पृथिवीखल्विदानीं हस्तगता प्रियवयस्यस्य। हीही शब्दो विस्मयहासयोरिति मेदिनी॥२५८॥

रत्नावली। (तथा करोति।)[२६०]

बाभ्र। देवि स्थाने देवीशब्दमुद्वहसि।[२६१]

वास। (रत्नावलीमालिङ्ग्य देवीशब्देन प्रसादं करोति)[२६२]

बाभ्र। इदानीं सफलपरिश्रमोऽस्मि संवृत्तः।[२६३]

यौग। देव तदुच्यतां किन्ते भूयः प्रियमुपकरोमि।[२६४]

राजा। किमतःपरमपि प्रियमस्ति। यतः[२६५]

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्व्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोशलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै करोमि स्पृहाम्।[२६६]

---

बभ्रुरिति। अर्घय सम्मानय॥२५९॥

रत्नेति। सुगमम्॥२६०॥

बाभ्रेति। देवीशब्दं यदुद्वहसि धारयसि तत्स्थाने युक्तम्। ससागरमहीदार्य्यगुणसम्पन्नत्वादिति भावः। युक्ते द्वे सांप्रतं स्थाने इत्यमरः॥२६१॥

वासेति। देवीशब्देनेति। देवीशब्दं लम्भयतीत्यर्थः॥२६२॥

बाभ्रेति। सुगमम्॥२६३॥

यौगेति। भूयः पुनः। प्रियं प्रीतिकरम्॥२६४॥

राजेति। सुगमम्॥२६५॥

नीत इति। विक्रमबाहुः सिंहलेश्वरः आत्मनः समतां तुल्यमानतां नीतः दुहितृस्वीकारेण मापितः। तथा उर्व्वीतले भूमितले ससागरायाः सागरान्तरायाः मह्याः पृथिव्याः प्राप्तेरेकहेतुरद्वितीयकारणं सारं धनभूता प्रिया इयं सागरिका रत्नावली प्राप्ता। सारो बले स्थिरांशे च मज्जिन पुंसि जले धने। न्याय्ये क्लीवं त्रिषुवरे इति मेदिनी।

तथापीदमस्तु।

उर्वीमुद्दामशस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः।
आकल्पान्तञ्च भूयात्समुपचितसुखः सङ्गमः सज्जनानां
निःशेषं यान्तु शान्तिं पिशुनजनगिरो दुर्जयावज्रलेपाः॥२६८

---

तथा भगिनीलाभात् देवी वासवदत्ता प्रीतिमानन्दमुपागता प्राप्ता। तथा कोशला दक्षिणकोशलाख्यदेशाश्च जिताः। त्वयि अमात्यवृषभे मन्त्रिप्रवरे सति विद्यमाने मम किं नास्ति यस्मै स्पृहां वाञ्छां करोमि। वृषभः श्रेष्ठन्टपयोरिति मेदिनी॥२६६॥

इदानीं गृहीतराजवेशो भरत आह तथापीति। तथापि इतरेषां प्रियाणां वत्सेश्वरानभ्यर्थनीयत्वेपि। इदं वक्ष्यमाणम्॥२६७॥

उर्वीमिति। वासवइन्द्र इष्टामभिलषितां वृष्टिं विसृजन् मुञ्चन् उर्वीं पृथ्वीम् उद्दामानि अप्रतिबद्धानि शस्यानि यस्याः सा तथोक्तां जनयतु करोतु। विधिवत् यथाविधि इष्टैर्यागैः करणैः विप्रमुख्याः सद्ब्राह्मणाः त्रिविष्टपे स्वर्गे वसन्ति ये ते त्रैविष्टपा स्तेषां त्रैविष्टपानां देवानां प्रीणनं तृप्तुत्पादनं विदधतु कुर्वन्तु। सुरलोकोद्यो दिवौ द्वे स्त्रियौ क्लीबे त्रिविष्टपमित्यमरः। तथा आकल्पान्तं प्रलयपर्य्यन्तम्। सम्वर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपीत्यमरः। समुपचितं सम्बद्धं सुखं यस्मात् स तथोक्तः सज्जनानां सङ्गमः संसर्गो भूयात्। लोकानामिति शेषः। कस्यापि कदाचिदप्यसत्सङ्गो माभूदिति भावः। तथा वज्रवल्लेपः सम्पर्को यासां ता दुर्जया दुरभिभवनीयाः पिशुनजनगिरः खलोक्तयश्च। पिशुनौ खलसूचकावित्यमरः। निःशेषं निरवशेषं यथा स्यात्तथा शान्तिं नाशं यान्तु। एतेन श्लोकेन कवेरप्यात्मनो रभ्यर्थनं द्रष्टव्यम्॥२६८॥

( इति निष्क्रान्ताः सर्व्वे । ) २६९

इति चतुर्थोऽङ्कः । २७०

इति श्रीहर्षदेवस्य कृतिरियं रत्नावली समाप्ता ॥

---

इतीति । सर्वे गृहीतभूमिका अधिकृताः ॥ २६९ ॥

चतुर्थोऽङ्कश्चतुर्थः परिच्छेदः ॥ २७० ॥

नवद्वीपाख्यभूमौ श्रीमद्भागीरथी-तटे ।
ग्रामं पूर्व्वस्थलीं नामविद्धि वासस्थलीं मम ॥

इति श्रीशिवनारायणशर्म्मकृतायां रत्नावलीटीकायां विद्योतनी-
समाख्यायां चतुर्थाङ्कविवरणम् ॥

## काव्यशास्त्र ।

टा॰आ॰मा॰

ऋतुसंहारः । महाकविकालिदासकृतः श्रीमणि-
रामकृतचन्द्रिकाऽभिधेयाटीकालङ्कृतः स॰... ॰ ५...१

रत्नपञ्चकम् । स॰ ... ... ... ... ... ॰ १..१

सूर्य्यशतकम्, श्रीगोपालशर्म्मविरचितम् । स॰ ..॰ १..१

सूर्य्यशतकम्, श्रीमन्मयूरभट्टविरचितम् । स॰ ... ॰ २...१

भामिनीविलासम्, श्रीमत्पण्डितजगन्नाथविरचितम् ॰ ४...१

चाणक्यश्लोकः, श्रीमत्पण्डितराज चाणक्य वि-
रचितः । स॰ ... ... ... ... ... ... ॰ १...१

शृङ्गारतिलकम्, महाकविकालिदासविरचितम्
वैद्यमहामहोपाध्याय श्रीमत् कविराजचन्द्र
मजुमदारप्रणीतशान्तिपञ्चटीकयासमेतम् । स॰ ॰ २..१

विद्वन्मोदतरङ्गिणी, गद्यपद्यमयात्मकम्, महा-
महोपाध्याय श्रीचिरञ्जीवीना विरचितम् स॰ ॰ ४...१

काव्यसंग्रहः । स॰ ... ... ... ... २ ॰...६

गीतगोविन्दम्, जयदेवगोस्वामि प्रणीतम्, बाल-
बोधिनीटीका सहितम् स॰ ... ...॰ ८...२

वैराग्यशतकम्, श्रीभर्त्तृहरिविरचितम् स॰ ... ॰ २...१

भोजप्रबन्धः, श्रीवल्लालविरचितः स॰ ... ... ॰ ४...१

रत्नावली, श्रीहर्षदेवविरचिता श्रीशिवनाथशर्म्म-
कृत विद्योतनीटीका सहिता स॰... ... ... १ ०... २

वेणीसंहारः, महाकवि भट्टनारायण प्रणीतम्
गवर्णमेण्ट संस्कृतपाठशालाध्यापक श्रीतारा-
नाथतर्कवाचस्पति भट्टाचार्य्य कृत व्याख्यान
सहितम् । स॰ ... ... ... ... ॰१ २...२